श्री लक्ष्मी नरसिंह प्रसन्न

# नारायणवर्म

## (प्रयोग-व्याख्यानसहितम्)

व्याख्यानकर्ता

नारदापरोक्षी श्री पांगरी श्रीनिवासाचार्याः

प्रकाशकाः

प्राणनाथाचार्य कृष्णाचार्य पांगरी

सर्वज्ञगीताचार्यसम्मत वेदार्थ प्रकाशन व्यासाश्रम संस्था

326/2A, राय रोड, टिळकवाडी, बेळगांव

॥ श्री लक्ष्मी नरसिंह प्रसन्न ॥

# नारायणवर्म

## (प्रयोग-व्याख्यानसहितम्)

व्याख्यानकर्ता

नारदापरोक्षी श्री पांगरी श्रीनिवासाचार्याः

प्रकाशकाः

श्री प्राणनाथ (नाना) कृष्णाचार्य पांगरी

सर्वज्ञगीताचार्यसम्मत वेदार्थ प्रकाशन व्यासाश्रम संस्था

326/2A, राय रोड, टिळकवाडी, बेळगांव

श्री नारायणवर्म

प्रयोग-व्याख्यानसहितम्

प्रथमं मुद्रणम् १९९५



क्रय = पंचदशरूप्यकाणि

पुस्तक प्राप्तिस्थानम्—

प्रा. कृ. पांगरी
३२६/२A, राय रोड, टिळकवाडी
बेळगांव ५९० ००६

मुद्रकः—

सुधा मुद्रण
उत्तरादि मठ कंपौंड
बसवनगुडि, बेंगळूर ५६० ००४

॥ श्री वैकुंठरामो विजयते ॥

# श्री कूडलि आर्य अक्षोभ्यतीर्थ श्रीपादंगळवर संस्थान

## श्री लक्ष्मीनारायण देवस्थान रस्ते, शिवमोग्ग-२

जीवेषु त्रैविध्यं वर्तते । सात्विकः राजसः तामसः इति । सुखमेव मे स्यात् दुःखं मनागपि माभूत् इति निखिलापेक्षा सद्भावेऽपि सन्मोक्षाधिकारिणः सात्विका एवेति श्रुतिशतसिद्धम् । अथापि संसारे कर्मवशात् अनेकदुःखान्यायास्सन्त्येव । एतादृश दुःखनिवृत्तौ भगवदनुग्रह एव मुख्यकारण् ।

त्रिलोकाधिपतिः इन्द्रोऽपि स्वराज्यभ्रष्टः दुःखयुक्तो बभूव । तदा ब्रह्मान्तर्गत-हर्याज्ञया विश्वरूपाचार्यं पुरोहितं वव्रे । तथा तैः सर्वविघ्नपरिहारकं भगवतोऽत्यन्तप्रीतिकरं नारायणवर्माख्यं परममङ्गलकरं मन्त्रं स्वीचक्रे । तन्मन्त्रजपबलेन समृद्धशक्तिः स्वरिपुदैत्यनिकरनिरासं विधाय पुनः स्वराज्यं प्राप्य सुखेनातिष्ठत् ।

स एष नारायणवर्म नामा मन्त्रश्रेष्ठः श्रीमद्भागवते षष्ठस्कन्धे वर्तते । अस्य मन्त्रस्य अनुष्ठानक्रमः तथा अर्थावबोधः अतीव क्लेशसाध्यः परं नारदापरोक्षिणः पांगूरी श्रीनिवासाचार्याः अस्य व्याख्यानं विधाय सकलसुजनानां सुखबोधाय अनुष्ठानक्रमं च विलिख्य अनुष्ठानाय परमोपकारं कृतवन्तः । एतादृशं अप्रकटितं ग्रन्थं तद्वंशीयाः प्राणनाथाचार्याः (नाना) मुद्रापयित्वा सर्वभगवद्भक्तवृन्दोपकारं अकुर्वत् । अस्य सदुपयोगं सर्वे लब्ध्वा कृतार्थाः भवन्तु तथा तद्वंशीयानां आयुरारोग्यैश्वर्यादिकं प्रदास्यतु भगवानिति अस्मदुपास्य वैकुंठरामदेवसन्निधाने भक्त्यतिशयनम्रकन्धराः प्रार्थयामः इति अनेक नारायणस्मरणानि ।

श्रीरघुप्रमतितीर्थ करकमलसञ्जातः
श्रीरघुप्रियतीर्थश्रीपादाः

# प्रास्ताविकम्

विदितचरमिदं यद् नारदापरोक्षिणः सुप्रसिद्ध पांगरी कुलावतंसाः श्रीनिवासाचार्याः नैकग्रन्थरत्ननिर्मातार इति । तैर्निर्मितग्रन्थेषु नारायणवर्म व्याख्यानं अपूर्वं वर्तते यथा नरसंबंन्धी नारं नृदेहार्थं तदेव अयनं आश्रयः यस्य सिंहमुखस्य इति नारायणः श्री नृसिंहः । तस्य मंन्त्ररूपमिदं स्तोत्रम् । इत्यादि ॥ इदमपूर्वं ग्रंन्थरत्नं संशोध्य प्रकाशयितुमुद्यताः पांगरी श्री वे.शा.सं. प्राणनाथाचार्याः नूनं प्रशंसार्हाः ॥ अनुग्रहरूप उपक्रमलेखं विलिख्य आशीर्वचनानुग्रहकर्तारः श्री कूडली आर्य अक्षोभ्यतीर्थमठाधीशाः श्री १०८ श्री रघुप्रियतीर्थमहोदयाः अस्मत्साष्टाङ्गनेकप्रणामविषयाः ।

एवं महापरिश्रमेण योग्यकाले मुद्रणकर्तारः सुप्रसिद्ध वरखेडकरोपाह्व श्री वे.शा.सं. बाळाचार्य तनुजन्मानः 'धनंजयाचार्ये'ति सार्थकनामधेयाः धनंजयाचार्याः सुधा मुद्रणालयाधिपाः प्रशंसार्हाः । अस्य ग्रन्थस्य पठन पाठन पारायणादिना नृहर्यनुग्रहपात्रभूताः भवन्तु अनेके सन्तः इति आशास्महे ।

भावनाम संवत्सर
आश्विन शु. दशमि
बेळगांव

भवदीयः
दामोदराचार्यः
उमर्जीत्युपाह्वः

॥ ಶ್ರೀ ಲಕ್ಷ್ಮೀನರಸಿಂಹ ಪ್ರಸನ್ನ ॥

# ಪ್ರಕಾಶಕರ ನಾಲ್ಕು ನುಡಿಗಳು

ಈ ಕಲಿಯುಗದಲ್ಲಿ ಅನೇಕ ಅಪರೋಕ್ಷ ಜ್ಞಾನಿಗಳು, ಅನೇಕ ಗ್ರಂಥನಿರ್ಮಾತೃಗಳು ಆಗಿ ಹೋಗಿದ್ದಾರೆ. ಅವರಲ್ಲಿ ನಾರದಾಪರೋಕ್ಷಿಗಳಾದ ಶ್ರೀ ಪಾಂಗರಿ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರು ಸುಪ್ರಸಿದ್ಧರು. ಅವರು ಮೂವತ್ತೆರಡು ಗ್ರಂಥಗಳನ್ನು ಬರೆದುದಲ್ಲದೇ ಎಷ್ಟೋ ಮಂತ್ರಗಳಿಗೆ ವ್ಯಾಖ್ಯಾನಗಳನ್ನು ಬರೆದಿದ್ದಾರೆ. ಇಲ್ಲಿಯವರೆಗೆ ಕೇವಲ ೧) ಭಾಗವತ ವಿರೋಧೋದ್ಧಾರ, ೨) ಗೀತಾ ತ್ರಿವಿಧಾರ್ಥ ವಿವೃತ್ತಿ, ೩) ಸಂಧ್ಯಾಭಾಷ್ಯ, ೪) ವಿಷ್ಣುಸಹಸ್ರನಾಮಭಾಷ್ಯ, ೫) ಶಿಕ್ಷಾರಾಮಾಯಣ ಮೊದಲಾದ ಗ್ರಂಥಗಳನ್ನು ಮುದ್ರಿಸಿ ಪ್ರಕಟಿಸಲಾಗಿದೆ. ಆದರೆ ಶಿಕ್ಷಾರಾಮಾಯಣದ ಹೊರತಾಗಿ ಉಳಿದ ಗ್ರಂಥಗಳು ಈಗ ಲಭ್ಯವಿಲ್ಲ. ಪುನರ್ಮುದ್ರಣ ಮಾಡುವದು ದೊಡ್ಡ ಪ್ರಕಾಶಕರಿಂದ ಮಾತ್ರ ಸಾಧ್ಯವೇ ಹೊರತು ಒಬ್ಬರಿಂದ ಆಗುವ ಮಾತಲ್ಲ.

ಸದ್ಯಕ್ಕೆ ಶ್ರೀ ನಾರದಾಪರೋಕ್ಷಿಗಳು ಬರೆದ "ನಾರಾಯಣವರ್ಮ"ದ ವ್ಯಾಖ್ಯಾನ ಹಾಗೂ ಪ್ರಯೋಗವನ್ನು ಮುದ್ರಿಸಿ ಸಜ್ಜನರ ಹಾಗೂ ಅಧಿಕಾರಿಗಳ ಕೈಯಲ್ಲಿ ಇಡುತ್ತಿದ್ದೇನೆ. ಈ ವ್ಯಾಖ್ಯಾನವು ಅಪರೂಪವಷ್ಟೇ ಅಲ್ಲ, ಗೂಢಾರ್ಥಗಳನ್ನೂ ಬಿಡಿಸಿ ಕೊಟ್ಟಿದ್ದಾರೆ. ಈ "ನಾರಾಯಣ ವರ್ಮ" ಮಂತ್ರದ ಪ್ರಯೋಗವಂತೂ ಅಪರೂಪದ್ದು ಇದ್ದು, ಇದರ ಆಚರಣೆಯಿಂದ ನಿಶ್ಚಿತ ಸಿದ್ಧಿಯಾಗುವದರಲ್ಲಿ ಯಾವ ಸಂದೇಹವೂ ಇಲ್ಲ. ಇದರ ಉಪಯೋಗವನ್ನು ಸಜ್ಜನರು ಮಾಡಿಕೊಂಡಲ್ಲಿ ನನ್ನ ಈ ಶ್ರಮ ಸಾರ್ಥಕವೆಂದು ಭಾವಿಸುತ್ತಿದ್ದೇನೆ.

ಈ ನಮ್ಮ ಪುಸ್ತಕ ಪ್ರಕಟನಾಕಾರ್ಯದಲ್ಲಿ ಪರೋಕ್ಷ ಅಪರೋಕ್ಷ ಸಹಾಯ ಸಹಕಾರ ಸಲ್ಲಿಸಿದ ಮಹನೀಯರು ಅನೇಕ. ಅವರನ್ನು ಕೃತಜ್ಞತೆಯಿಂದ

# प्रास्ताविकम्

विदितचरमिदं यद् नारदापरोक्षिणः सुप्रसिद्ध पांगरी कुलावतंसाः श्रीनिवासाचार्याः नैकग्रन्थरत्ननिर्मातार इति। तैर्निर्मितग्रन्थेषु नारायणवर्म व्याख्यानं अपूर्वं वर्तते यथा नरसंबंन्धी नारं नृदेहार्थं तदेव अयनं आश्रयः यस्य सिंहमुखस्य इति नारायणः श्री नृसिंहः। तस्य मंन्त्ररूपमिदं स्तोत्रम्। इत्यादि ॥ इदमपूर्वं ग्रंन्थरत्नं संशोध्य प्रकाशयितुमुद्यताः पांगरी श्री वे.शा.सं. प्राणनाथाचार्याः नूनं प्रशंसार्हाः ॥ अनुग्रहरूप उपक्रमलेखं विलिख्य आशीर्वचनानुग्रहकर्तारः श्री कूडली आर्य अक्षोभ्यतीर्थमठाधीशाः श्री १०८ श्री रघुप्रियतीर्थमहोदयाः अस्मत्साष्टाङ्गानेकप्रणामविषयाः।

एवं महापरिश्रमेण योग्यकाले मुद्रणकर्तारः सुप्रसिद्ध वरखेडकरोपाह्व श्री वे.शा.सं. बाळाचार्य तनुजन्मानः 'धनंजयाचार्ये'ति सार्थकनामधेयाः धनंजयाचार्याः सुधा मुद्रणालयाधिपाः प्रशंसार्हाः। अस्य ग्रन्थस्य पठन पाठन पारायणादिना नृहर्यनुग्रहपात्रभूताः भवन्तु अनेके सन्तः इति आशास्महे।

भावनाम संवत्सर<br>
आश्विन शु. दशमि<br>
बेळगांव

भवदीयः<br>
दामोदराचार्यः<br>
उमर्जीत्युपाह्वः

॥ ಶ್ರೀ ಲಕ್ಷ್ಮೀನರಸಿಂಹ ಪ್ರಸನ್ನ ॥

# ಪ್ರಕಾಶಕರ ನಾಲ್ಕು ನುಡಿಗಳು

ಈ ಕಲಿಯುಗದಲ್ಲಿ ಅನೇಕ ಅಪರೋಕ್ಷ ಜ್ಞಾನಿಗಳು, ಅನೇಕ ಗ್ರಂಥನಿರ್ಮಾತೃಗಳು ಆಗಿ ಹೋಗಿದ್ದಾರೆ. ಅವರಲ್ಲಿ ನಾರದಾಪರೋಕ್ಷಿಗಳಾದ ಶ್ರೀ ಪಾಂಗರಿ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರು ಸುಪ್ರಸಿದ್ಧರು. ಅವರು ಮೂವತ್ತೆರಡು ಗ್ರಂಥಗಳನ್ನು ಬರೆದುದಲ್ಲದೇ ಎಷ್ಟೋ ಮಂತ್ರಗಳಿಗೆ ವ್ಯಾಖ್ಯಾನಗಳನ್ನು ಬರೆದಿದ್ದಾರೆ. ಇಲ್ಲಿಯವರೆಗೆ ಕೇವಲ ೧) ಭಾಗವತ ವಿರೋಧೋದ್ಧಾರ, ೨) ಗೀತಾ ತ್ರಿವಿಧಾರ್ಥ ವಿವೃತ್ತಿ, ೩) ಸಂಧ್ಯಾಭಾಷ್ಯ, ೪) ವಿಷ್ಣುಸಹಸ್ರನಾಮಭಾಷ್ಯ, ೫) ಶಿಕ್ಷಾರಾಮಾಯಣ ಮೊದಲಾದ ಗ್ರಂಥಗಳನ್ನು ಮುದ್ರಿಸಿ ಪ್ರಕಟಿಸಲಾಗಿದೆ. ಆದರೆ ಶಿಕ್ಷಾರಾಮಾಯಣದ ಹೊರತಾಗಿ ಉಳಿದ ಗ್ರಂಥಗಳು ಈಗ ಲಭ್ಯವಿಲ್ಲ. ಪುನರ್ಮುದ್ರಣ ಮಾಡುವದು ದೊಡ್ಡ ಪ್ರಕಾಶಕರಿಂದ ಮಾತ್ರ ಸಾಧ್ಯವೇ ಹೊರತು ಒಬ್ಬರಿಂದ ಆಗುವ ಮಾತಲ್ಲ.

ಸದ್ಯಕ್ಕೆ ಶ್ರೀ ನಾರದಾಪರೋಕ್ಷಿಗಳು ಬರೆದ "ನಾರಾಯಣವರ್ಮ"ದ ವ್ಯಾಖ್ಯಾನ ಹಾಗೂ ಪ್ರಯೋಗವನ್ನು ಮುದ್ರಿಸಿ ಸಜ್ಜನರ ಹಾಗೂ ಅಧಿಕಾರಿಗಳ ಕೈಯಲ್ಲಿ ಇಡುತ್ತಿದ್ದೇನೆ. ಈ ವ್ಯಾಖ್ಯಾನವು ಅವರೂಪವಷ್ಟೇ ಅಲ್ಲ, ಗೂಢಾರ್ಥಗಳನ್ನೂ ಬಿಡಿಸಿ ಕೊಟ್ಟಿದ್ದಾರೆ. ಈ "ನಾರಾಯಣ ವರ್ಮ" ಮಂತ್ರದ ಪ್ರಯೋಗವಂತೂ ಅಪರೂಪದ್ದು ಇದ್ದು, ಇದರ ಆಚರಣೆಯಿಂದ ನಿಶ್ಚಿತ ಸಿದ್ಧಿಯಾಗುವದರಲ್ಲಿ ಯಾವ ಸಂದೇಹವೂ ಇಲ್ಲ. ಇದರ ಉಪಯೋಗವನ್ನು ಸಜ್ಜನರು ಮಾಡಿಕೊಂಡಲ್ಲಿ ನನ್ನ ಈ ಶ್ರಮ ಸಾರ್ಥಕವೆಂದು ಭಾವಿಸುತ್ತಿದ್ದೇನೆ.

ಈ ನಮ್ಮ ಪುಸ್ತಕ ಪ್ರಕಟನಾಕಾರ್ಯದಲ್ಲಿ ಪರೋಕ್ಷ ಅಪರೋಕ್ಷ ಸಹಾಯ ಸಹಕಾರ ಸಲ್ಲಿಸಿದ ಮಹನೀಯರು ಅನೇಕ. ಅವರನ್ನು ಕೃತಜ್ಞತೆಯಿಂದ

ಸ್ಮರಿಸುವದು ನನ್ನ ಕರ್ತವ್ಯ. ಮುದ್ರಣ ಕಾಗದಗಳ ಬೆಲೆಗಳಂತೂ ಗಗನಕ್ಕೇರಿದ ಈ ಕಾಲದಲ್ಲಿ ಮುದ್ರಣ ಕಾಗದವನ್ನು ಕನಿಷ್ಠ ಬೆಲೆಗಳಲ್ಲಿ ದೊರಕಿಸಿಕೊಟ್ಟ ಶ್ರೀ ಎಸ್. ಆರ್. ಹುಕ್ಕೇರಿಯವರಿಗೂ, ದಾಂಡೇಲಿ ಕಾಗದ ಮಿಲ್ (W.C.P.M.)ದ ವ್ಯವಸ್ಥಾಪಕರಿಗೂ, ಮುದ್ರಣವನ್ನು ಸಕಾಲದಲ್ಲಿ ಹಾಗೂ ರಿಯಾಯಿತಿ ದರದಲ್ಲಿ ಮಾಡಿಕೊಟ್ಟ ಸುಧಾ ಮುದ್ರಣ ಹಾಗೂ ಶ್ರೀ ಶಂಕರಿ ಆಫ್‌ಸೇಟ್ ಪ್ರಿಂಟರ್ಸ್‌ದ ಚಾಲಕ ಹಾಗೂ ಸಿಬ್ಬಂದಿವರ್ಗಕ್ಕೂ ಹಾಗೂ ಶ್ರೀ ಸುರೇಶ ಕಟ್ಟಿಯವರಿಗೂ ಅನೇಕ ಅಭಿನಂದನೆಗಳನ್ನು ಸಲ್ಲಿಸುವ ಭಾಗ್ಯ ನನ್ನದು.

ಇದೇ ರೀತಿ ನಮ್ಮ ಪೂರ್ವಜರ ಅನೇಕ ಗ್ರಂಥಗಳಲ್ಲಿ ಕೆಲವನ್ನಾದರೂ ಪ್ರಕಾಶ ಮಾಡಿ ಸಜ್ಜನರ ಕೈಯಲ್ಲಿ ಇಡುವ ಭಾಗ್ಯವನ್ನು ಆ ಪವಮಾನ ದೇವದ್ವಯರು ಹಾಗೂ ಗುರು ಹಿರಿಯರು ನನಗೆ ದಯಪಾಲಿಸಲಿ ಎಂದು ಬೇಡಿಕೊಂಡು ಈ ನಾಲ್ಕುಮಾತುಗಳನ್ನು ಮುಗಿಸುತ್ತಿದ್ದೇನೆ.

ಈ ಗ್ರಂಥ ಪ್ರಕಟನಾಕಾರ್ಯದಲ್ಲಿಯ ಗುಣದೋಷಗಳನ್ನು ನಮ್ಮ ಗಮನಕ್ಕೆ ತಂದಲ್ಲಿ ಉಪಕೃತರಾಗುತ್ತೇವೆ.

ಬೆಳಗಾವಿ — ಪ್ರಾಣನಾಥಾಚಾರ್ಯ ಕೃಷ್ಣಾಚಾರ್ಯ ಪಾಂಗರಿ

ವೈ. ಶು. ತ್ರಯೋದಶಿ

ಶಕೆ ೧೯೧೭

श्रीगुरुभ्यो नमः ॥

श्रीमल्लक्ष्मीनृसिंहो जयति ॥

# अथ नारायणवर्म

## (व्याख्यानसहितम्)

**श्रीशं मृगेन्द्रवदनं नत्वा श्रीनारदान्तरम् ।**
**व्याख्यां करिष्ये तत्प्रीत्यै श्रीनारायणवर्मणः ॥ १ ॥**

अथ द्वापरे सत्सु सदयबुद्धिभिर्ब्रह्मादिभिरर्थितो भगवान्व्यासात्मना भूमाववतीर्य तदज्ञाननिवर्तकमहाभारतादिनानाग्रन्थान्कृत्वा कृत्यशेषपूरक-श्रीनारदप्रार्थनया श्रीमद्भागवतं कुर्वन् सतां त्रिविधतापभयनिवृत्यै सर्ववेदमातृगायत्र्यर्थरूपविष्णुगायत्रीप्रतिपादितरूपत्रयमन्त्राक्षरदैवतविष्णु-रूपाणां सर्वतोरक्षणप्रार्थनात्मकं नारायणवर्माख्यं स्तोत्रं पठनादीच्छूनां विश्वासजननायोपक्षिप्तेतिहासोपोद्घातसङ्गत्योपनिबबन्ध । यो ह वा अविदितार्थछन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्षति गर्ते वा पात्यते प्रवामीयत इति श्रुतेः ऋष्यादिज्ञानं विनाऽनर्थप्राप्तेः ऋष्यादिकं वक्तुं तावद्राजप्रश्नमुपन्यस्तवान् राजोवाचेति ।

**राजोवाच—**

**यया गुप्तः सहस्राक्षः सवाहान्रिपुसैनिकान् ।**
**क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥ १ ॥**

यया नारायणवर्म परममूलगायत्र्याख्यविद्यया गुप्तो रक्षितः सहस्राक्षः इन्द्रः सवाहान् वाहनसहितान् निर्वाहकसेनापतियुक्तान्वा रिपुसैनिकान्

शत्रुभूतदैत्यसेनास्थवीरान् क्रीडन्निव विहरन्निव लीलयैवेत्यर्थः। विनिर्जित्य पुनर्युयुत्साभावरूपविशेषेण जित्वा त्रिलोक्याः त्रयाणां पातालभूस्वर्गाख्यानां भूर्भुवःस्वराख्यानां वा लोकानां समाहारस्त्रिलोकी तस्याः श्रियं सम्पदम्। आधिपत्यमिति यावत्। बुभुजे भुक्तवान्। यत्तदोर्नित्यसंबन्धात् लिङ्गविपरिणतेनोत्तरस्थितेन तन्ममाख्याहीत्यत्रत्येन तदित्यनेनान्वयः। तां गायत्र्याख्यविद्यामाख्याहीत्यर्थः। ननु विद्यावर्मणोरेकार्थकयोः सतोः कथमर्थपार्थक्यमुच्यते इति चेन्न। तथात्वे आदौ, सवाहान्रिपुसैनिकान् क्रीडन्निव विनिर्जित्येत्यस्य सत्त्वात्। यथाततायिनः शत्रून्येन गुप्तो, जयन्मृध इत्युत्तरत्रोक्त्या च पुनरुक्तप्रसङ्गात्। ययेत्यनेनैवार्थपूर्तौ येनेत्यस्याधिक्यापाताच्च। न चानेकयच्छब्दानामेकतच्छब्देनैव यस्ते स्तन इत्यादौ निर्वाहदर्शनात् नाधिक्यमिति वाच्यम्। यच्छब्दलिङ्गव्यत्ययसद्भावेनार्थद्वयस्यैवौचित्यात्। नापि प्रश्नद्वयोपगमे अग्रे उत्तराभावादनुपपत्तिः। प्राप्तमृत्युभयस्य परीक्षितः तन्निवारणोपायभूतस्य साङ्गस्यास्य ज्ञाने सति भगवत्सङ्कल्पस्य स्तोत्रसामर्थ्यस्य वा वैफल्यं स्यादङ्गवैकल्यात्फलाभावे च सामर्थ्योच्छेदासिद्धेश्चेति जानता रुद्ररूपेण शुकेन साक्षादनुक्तत्वेऽपि प्रकारान्तरेण सूचितत्वात्। अन्यथा नारायणवर्मणि नारायणमन्त्रन्यासस्य युक्तत्वेऽपि वासुदेवादिमन्त्रन्यासायोगात्। अतोऽर्थपार्थक्यं युक्तम्। ननु तथात्वेऽपि वासुदेवादिमन्त्रन्यासोपपत्तिः कथमिति चेदुच्यते। ब्रह्मगायत्र्याः प्रथमचरणे जगत्स्रष्ट्रर्थकसवितृशब्दवाच्यः प्रतिपादितः। विष्णुगायत्र्याद्यपादेऽपि नरसमूहो नारं जीवजातं तदयनमाश्रय इति निर्वचनात्। आसीदुदारगुणवारिधिरित्याद्युक्तेश्च जगत्सर्जनयोग्यगुणविशिष्टनारायणशब्दवाच्यस्यैवोक्तेः। तथा द्वितीयपादे चोक्तस्य प्रकाशकार्थकदेवशब्दस्य प्रकाश्याकांक्षायां विष्णुगायत्रीद्वितीयपादे वा सशीलत्वेन वा सुशब्दोदितजीवग्रहणेन पूर्तिसहितदेवशब्दोक्तेश्च। तद्वत्तृतीयपादे

चोक्तस्येन्द्रियप्रेरकत्वस्यान्तःस्थत्वान्यथानुपपत्तेरस्यास्तृतीयपादे विशप्रवेशन इति धातोरिन्द्रियप्रवेशार्थकविष्णुशब्दप्रयोगाच्च विष्णुगायत्र्याः ब्रह्मगायत्रीव्याख्यानरूपत्वं सिद्ध्यति। अतस्तत्रोक्तभगवन्नाममन्त्राक्षरन्यासोपपत्तिः सेत्स्यति। ननु मन्त्रावयवैरेव न्यासकर्तव्यता दृष्टा। तत्कथमेषां नारायणवर्मावयवत्वमिति चेत्तदप्युच्यते। आदावुक्ताष्टाक्षरमन्त्रवर्णदेवताप्रतिपादकानां हरिर्विदध्यादीत्यादीनां धर्मावनायोरुकृतावतार इत्यन्तानामष्टश्लोकानामुपनिबन्धनात्। ततः परं द्वादशाक्षरवासुदेवमन्त्रवर्णदेवतानां मां केशव इत्यादिना दामोदरोऽव्यादनुसंध्यं प्रभाते इत्यन्तेन प्रतिपादनात्। तन्त्रसारेऽपि तासामेवोक्तेः। ततश्च सप्ताक्षरविष्णुमन्त्रवर्णाभिमानिनां चक्रगदाशङ्खखड्गचर्मगरुडविष्वक्सेनानां नामरूपयानायुधपार्षदभूषणसत्यानां वा तत्तद्गतत्वात्तत्तन्नामकानां भगवद्रूपाणां वा विष्णुः श्रीमानित्यादि नायावदन्तेन निरूपणाच्चावयवत्वसिद्धिः संपद्यत एव। किञ्च गायत्र्यर्थकत्वमस्यानेनापि संभवति। तद्यथा। गायत्र्याद्यार्धर्चस्य शास्त्रतः षोडशाक्षरत्वेऽपि गणनया पञ्चदशाक्षरत्वलाभात् तावत्संख्यश्लोकानामेव वृत्तसाम्यात्। अपरार्धर्चस्याष्टाक्षरत्वात्तावत्संख्यया ऽन्यवृत्तसाम्येन भवितव्येऽपि अन्तिमवर्णस्य व्यञ्जनान्तत्वादन्तिमश्लोकस्यापि पृथग्वृत्तदर्शनात् गायत्रीमूलकत्वमवसीयते। अपि च सर्वभागवतस्य वाच्यवक्तृसाम्यात्समानफलत्वेऽपि अस्यैव महाभयरक्षणशक्त्यन्यथाऽनुपपत्त्या गायतां त्राणकर्तृत्वरूपप्रवृत्तिनिमित्तवद्गायत्रीशब्दाभिधेयमन्त्रमूलकत्वमेव कारणमभिप्रेयते। **किंच।** नारायणवर्मणो गायत्रीमूलकत्वानुसन्धानेन धारकाणां पूर्वश्लोके शत्रुजयश्रीभोगरूपफलद्वयोक्त्या तदनुसन्धानाभावे तूत्तरश्लोके शत्रुजयरूपैकफलस्यैवोक्त्या चोक्तार्थस्य सिद्धिरवगम्यते। अतः साधकेन प्रतिश्लोकमादौ गायत्रीमन्त्राक्षरबीजमुपन्यस्यैव पठने कृते सर्वकार्यसिद्धि र्जायत इति तात्पर्यमवगन्तव्यम्॥ १ ॥

एवं नारायणवर्म महासामर्थ्यनिमित्तमूलजिज्ञासया पृष्ट्वेदानीं स्वरूपजिज्ञासया पृच्छति भगवन्निति।

**भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम्।**
**यथाततायिनः शत्रून्येन गुप्तो जयन्मृधे ॥ २ ॥**

हे भगवन्, पूज्य शुकाचार्य। तच्छब्दलिङ्गविपरिणामेन पूर्वमन्वय उक्तः। यद्वा पूर्वयच्छब्दबलात्तस्या इति लभ्यते। तथाच तस्याः गायत्रीविद्यायाः तत् तनुविस्तार इत्यतः क्विपि रूपमेतत्। अर्थविस्तारकमित्यर्थः। नारायणात्मकं अराः शुक्रशोणित सम्बन्धरूपदोषाः तद्युक्तमयनं स्थानरूपत्वाच्छरीरं यस्य सो रायणः आ अद्धा प्रत्यक्षमपि अरायणो न भवतीति नारायणो नृसिंहः स्तम्भादाविर्भूतत्वात्। यद्वा नुरिदं नारं मनुष्याकारशरीरं तत् अयनं आश्रयो यस्य सिंहमुखस्य तत् नारायणं तदस्यास्तीति अर्शा आदित्वादच्। अथवा नार इति शब्दः अयनं पूर्वोच्चार्यत्वेन आश्रयो यस्य सिंहशब्दस्य स नारसिंहशब्दः वाचकत्वेनास्यास्तीति स तथा। नारायणस्यावतारोऽयमिति वा नारायणो नृसिंहः स आत्मा देवता यस्य तत् नारायणात्मकम्। स्वार्थे कः। ननु यथा श्रुतार्थे संभवति सति किं क्लिष्टकल्पनयेति चेन्न। अभिप्रायान्तरसद्भावात्। तथा हि। भीतिकाले नृसिंहं त्विति पञ्चरात्रागमोक्तेरत्र च संनह्येद्भय आगते इत्युक्तेश्च नृसिंहरूपस्य भयहरणशीलत्वेनात्र योग्यत्वात्। किं च यद्यत्प्रतिपाद्यं तत्तद्दैवतमिति हि प्रसिद्धम्। अत्र चाद्यपद्ये हरिः प्रतिपादितः तच्छब्दस्य सिंहे प्रसिद्धत्वात्। भगवतोऽनन्तगुणत्वेऽपि द्वात्रिंशदक्षर-नृसिंहमन्त्रोक्ताष्टविशेषणविवक्षया अत्राष्टगुणोक्त्या च मेघंकरादिक्षेत्रेषु नृसिंहस्याष्टबाहुत्वदर्शनाच्चादौ। दुर्गेष्वटव्याजिमुखादिष्वित्यादिना मध्ये। विदिक्षु दिक्ष्वित्यादीनान्ते च प्रतिपादितत्वेन नृसिंहदेवताकत्वस्य

कैमुत्यसिद्धत्वादिति। किं च येन कवचेनेति कर्त्रा। यथा येन प्रकारेणेति करणार्थकतृतीयार्थकमव्ययम्। गुप्तो रक्षितः सन् मृधे युद्धे आततायिनः अग्निदोगरदश्चैवेत्याद्युक्तषड्विधान् शत्रून् अजयत् जितवान्। यच्छब्दबलादत्रापि तत् तथेति च लभ्यते। तत् वर्मकवचाख्यस्तोत्रं तथा प्रकारं चाख्याहीत्यन्वयः॥ २॥

**श्रीशुक उवाच—**

**वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते।**
**नारायणाख्यं वर्माह तदिहैकमनाः श्रृणु ॥ ३॥**

एवं पृष्टः शुकः परीक्षिद्विश्वासदार्ढ्याय। भगवता ब्रह्मणे प्रोक्तत्वात्तेन च नारदायोपदिष्टत्वान्नारदेन तु श्रीवेदव्यासाय प्रार्थनपूर्वक सूचितत्वाद्व्यासेन निबद्धत्वाच्छुकेन च पठितत्वात् एतेषां यस्य वाक्यं स ऋषिरित्युक्त्या ऋषित्वे सिद्धेऽपि असाधारण्येन व्यपदेशा भवन्तीति न्यायमाश्रित्य विश्वरूपस्यैतदृषित्वकथनाय च इन्द्रेण साकं तत्संवादमाह वृत इति।

पुरोहितो वृतः त्वं नः पुरोहित इति देवैर्वृतोऽङ्गीकृतस्त्वाष्ट्रस्त्वष्ट्रनामकादित्यपुत्रो विश्वरूपस्तदन्तःस्थस्तन्नामको विष्णुर्वा। यद्वा पुरः अग्रे अहितं यस्य सः। अथ वा पुरा पूर्वं ऊहितः यदि दैत्यस्वस्रेयत्वेन केवलास्मद्धितकारी न स्यात्तर्हि अस्मत्पुरोहितत्वेन अमरोऽपि न स्यादिति तर्कितः। अध्याहारस्तर्क ऊह इत्यभिधानात्। तादृशस्त्वाष्ट्रः। अनुपृच्छते। पश्चात्सादृश्ययोरन्वित्यभिधानात् त्वत्सदृशं पृच्छकाय महेन्द्राय पुरन्दराय। नारायणाख्यं नारायणावतारो नृसिंहः आख्यायते दैवतत्वेन प्रतिपाद्यते यस्मिंस्तत्। यद्वा न रीयेते क्षीयेते अयने दक्षिणोत्तरायणे यस्य स नरायनः।

रीङ्क्षये। अक्षीणगमनो वा सविता तदन्तःस्थत्वान्नारायणो भगवान् तत्प्रतिपादकत्वाद्गायत्रीमन्त्रोऽपि नारायणः आदावेव वृद्धत्वात्। तस्याख्या व्याख्या यस्मिंस्तत् यत् वर्म कवचमाह। तत्कवचं इहास्मिन्काले एतद्भयनिवृत्तिविषये वा एकमनाः एकाग्रान्तःकरणो भूत्वा श्रृणु। अवधारयेत्यर्थः। अनेनास्य विश्वरूप ऋषिः। श्रीनृसिंहो देवता। आद्यानां पञ्चदशश्लोकानां त्रिष्टुप् छन्दः। ततः सप्तानामनुष्टुप् अन्त्यस्य पुनस्त्रिष्टुप् छन्दः। सर्वभयनिवारणार्थे विनियोग इति सूचितम्॥ ३॥

एवं पुरोहितृपुरोधातृसंवादसिद्धाप्तवाक्यत्वेन स्वयं प्रामाण्यमभिधाय विश्वरूपोऽपि अनुबन्धचतुष्टयवत्त्वेन प्रामाण्यं वक्तुं तावदधिकारिस्वरूपमभिधत्त इत्याह **धौताङ्घ्रीति**।

**विश्वरूप उवाच—**

**धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः।**
**कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥ ४ ॥**

आदौ धौताङ्घ्रिपाणिः स्नातोऽपि प्रक्षालितकरचरण इत्यर्थः। उदङ्मुखः उत्तराभिमुखः सपवित्रः स्वर्णरौप्यखड्गमृगशृङ्गदर्भमयपवित्रधृक्। आचम्य विधियुक्ताचमनं कृत्वा। शुचिः शुद्धः वाग्यतः मौनी मन्त्राभ्यां अष्टाक्षरद्वादशाक्षरमन्त्रद्वयेन कृतस्वाङ्गकरन्यासः स्वस्य अङ्गन्यासः मूर्धादिपादपर्यन्तः। करन्यासः अङ्गुलिन्यासश्च। कृतौ स्वाङ्गकरन्यासौ क्रमाद्येन स तथा। संनह्येदित्युत्तरेणान्वयः॥ ४॥

एवं अधिकारिस्वरूपमुक्त्वा विषयप्रयोजनसंबन्धान्दर्शयति **नारायणेति**।

**नारायणमयं वर्म संनह्येद्भय आगते ।**
**दैवभूतात्मकर्मभ्यो नारायणमयः पुमान् ॥ ५ ॥**

पुमान् साधकः नारायणमयः नारायणो नृसिंहः मयः प्रधानो यस्य स तथा सन् । मयं प्रधानमुद्दिष्टमित्युक्तेः । विष्णुसर्वोत्तमत्वज्ञानवानित्यर्थः । दैवभूतात्मकर्मभ्यः दैवं अधिदैवं तत्त्वदेवतात्मकम् । भूतं अधिभूतं आकाशादिपञ्चभूतात्मकम् । आत्म अध्यात्मं मनोबुद्धीन्द्रियात्मकम् । तेषां कर्मभ्यः प्रातिकूल्यरूपव्यापारेभ्यः । अथवा । क्रमात् अनावृष्ट्युन्माद-ज्वराख्यकर्मभ्यः भये आगते प्राप्ते सति । नारायणमयं नृसिंहप्रतिपादनप्रचुरं वर्म कवचं संनह्येत् बध्नीयात् । भय आगत इत्यनेन तापत्रयभयनिवारणं प्रयोजनम् । वर्म संनह्येत् इत्यनेन विषयः । आगत इति सत्सप्तम्या संनह्येदिति विधिना च तदन्वये च उक्तगुणविशिष्टपुंसः कर्तृत्वकथनेन चाधिकारी । यथायथं च संबन्धः सूचितः ॥ ५ ॥

कृतस्वाङ्गकरन्यास इत्यनेनोक्तन्यासं विशदयितुमङ्गन्यासं तावदाह **पादयोरिति ।**

**पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ।**
**मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ॥ ६ ॥**

ॐकारादीनि ॐ नमो नारायणायेत्यष्टाक्षराणि आनुपूर्व्यात् मन्त्रवर्णक्रममनुसृत्येत्यर्थः । पादयोरित्यादि । तत्प्रभृति शिरःपर्यन्ताष्टाङ्गेषु । हृदि मनसि । उरसि वक्षसि । यद्वा हृच्छब्देन उदरसंलग्न हृद्भागे । उरःशब्देन कण्ठसंलग्नहृद्भागे । विन्यसेत् स्थापयेत् । अनेनास्योक्तमन्त्रस्य न महामन्त्रत्वम् । तदुक्तन्यासादिवैलक्षण्यात् । न हि महामन्त्रस्यान्यमन्त्राङ्गत्वं युक्तं स्यात् । एवमेवेतरयोरपि ज्ञेयम् ॥ ६ ॥

सङ्केतेनोक्तानि मन्त्राक्षराणि व्यञ्जयन् न्यासस्य वैकल्पिकं सर्गस्थितिप्रकारं च सूचयित्वा करन्यासं स्पष्टयति ॐमिति ।

**ॐ नमो नारायणायेति विपर्ययमथापि वा ।**
**करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया ॥ ७ ॥**

अत्र पादे अक्षराधिक्यं न छन्दोभङ्गाय । न वा एकेनाक्षरेण छन्दांसि वियन्तीति श्रुतेः । इति एवं मन्त्राक्षराणीत्यर्थः । अथ अथवा विपर्ययं शिरआदिपादपर्यन्तं यथा स्यात्तथा विन्यसेदिति पूर्वेणान्वयः । अपिशब्दात् शिरो मुखोरोहृत्पादजानूरूदरस्थानेषु इति विन्यसेत् । अत्रायं विशेषः । धारको वर्णी चेत् विपर्ययशब्देनोक्तं सृष्टिन्यासं कुर्यात् । गृही चेत् अपिशब्दोक्तं स्थितिन्यासं कुर्यात् । यतिश्चेत् पादयोरित्यादिनोक्तं लयन्यासं कुर्यादिति । तदुक्तं वायवीये । स्थितिन्यासो गृहस्थानामुत्पत्ति-र्ब्रह्मचारिणाम् । यतीनां संहृतिः प्रोक्तेति । मूर्धादिपादपर्यन्तः सृष्टिस्तद्व्यत्क्रमाल्लयः । सृष्टितोऽर्धं लयाच्चार्धं स्थितिरेवं त्रिधा मत इति च । ततोऽङ्गन्यासान्ते द्वादशाक्षरविद्यया ॐ नमो भगवते वासुदेवायेति द्वादशाक्षरमन्त्रेण करन्यासं कुर्यात् ॥ ७ ॥

तमेव मन्त्रसङ्केतेन ब्रुवन् करन्यासं व्यनक्ति **प्रणवादीति ।**

**प्रणवादियकारान्तमङ्गुल्यङ्गुष्ठपर्वसु ।**
**न्यसेद्धृदय ॐकारं विकारमनु मूर्धनि ॥ ८ ॥**

ननु नारायणविष्णुमन्त्रौ स्फुटमुक्त्वैतस्यैव सङ्केतोक्तिः कुत इति चेत् उभयोः सर्वभागवते अनुक्तत्वात् अस्य तु चतुर्थस्कन्धे ध्रुवं प्रति श्रीनारदोक्तत्वेन सुज्ञेयत्वादिति ज्ञेयम् । प्रणवः ॐकारः आदौ यस्य तथा यकारः अन्ते यस्य तादृशं ॐ नमो भगवते वासुदेवायेति वर्णद्वादशकं

अङ्गुल्यङ्गुष्ठपर्वसु अङ्गुल्यः कुरुपाण्डवन्यायेन अङ्गुष्ठातिरिक्ताः अष्टाङ्गुल्यः अङ्गुष्ठयोः प्रत्येकं पर्वद्वयं तथा च चतुष्पर्वाणि एवं द्वादशस्थानेषु यथा स्यात्तथा करन्यासं कुर्यादिति पूर्वेणान्वयः। अथ क्रमप्राप्तविष्णुसप्ताक्षरैर्हृदयादिन्यासमाह न्यसेदिति। प्रायोऽत्र स्पष्टार्थपदानि। अनु हृदयन्यासानन्तरम्। पश्चात्सादृश्ययोरन्वित्यभिधानात्। मूर्धनि शिरसि॥ ८॥

षकारं तु भ्रुवोर्मध्ये णकारं शिखयाऽदिशेत्।
वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु ॥ ९॥

शिखयेति तृतीया सप्तम्यर्थे। णकारं शिखायामित्यर्थः। दिशेत् निर्दिशेत्। युञ्ज्यात् योजयेत्। सर्वसन्धिषु कवचस्थानीयाङ्गसन्धिषु।। ९॥

मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद्बुधः।
सविसर्गं फडन्तं तु सर्वदिक्षु विनिर्दिशेत् ॥ १०॥

सविसर्गं मकारम्। फडन्तं फडिति अन्ते यस्य तत्। अतद्गुणसंविज्ञानोऽत्र। तादृशमन्त्रमुद्दिश्य अस्त्रायेत्युक्त्वा युञ्ज्यादिति पूर्वेणान्वयः। मः अस्त्राय फट् इति वक्तव्यमित्यर्थः। बुधः अनेनेति शेषः। मन्त्रत्रयन्यासेनेत्यर्थः। मन्त्रमूर्तिः मन्त्रमयशरीरो भवेत्। तदैतद्धर्मधारणे अधिकारसंपन्नो भवेदिति भावः। मः अस्त्राय फट् इत्येतत् सर्वदिक्षु विनिर्दिशेच्च। यद्वा मन्त्रत्रयाक्षरजातं सर्वदिक्षु विनिर्दिशेत्। तद्यथा। नारायणाष्टाक्षराणि अष्ट दिक्षु। वासुदेवद्वादशाक्षराणि भूरादिसप्तलोकेषु अनिरुद्धादिनारायणान्तपञ्चलोकेषु चेति द्वादशदिक्षु। अग्निवायुसूर्यचन्द्रनक्षत्रशुक्रबुधभौमगुरुशनिसप्तर्षिध्रुवलोकेषु वा। विष्णुसप्ताक्षराणि सप्ततलेषु। अथवा विष्णुसप्ताक्षराण्येव सर्वदिक्षु सन्ध्योपस्थानोक्त-

सप्तदिक्षु । किंवा दिक्कोणोर्ध्वाधःपरितोन्तर्बहिरिति सप्तस्थानेषु । विदिक्षु दिक्ष्वित्याद्युक्तेः । एवं दिग्बन्धं कुर्यादिति भावः ॥ १० ॥

न्यस्याक्षरं मन्त्रं व्यनक्ति **ॐमिति ।**

**ॐ विष्णवे नमः ॥**
**इत्यात्मानं परं ध्यायेद् ध्येयं षट्शक्तिभिर्युतम् ।**
**विद्यातेजस्तपोमूर्तिरिमं मन्त्रमुदाहरेत्** ॥ ११ ॥

अयं मन्त्रः सप्ताक्षरो ज्ञेयः। षणयोर्भेदाङ्गीकारेण सप्तानामेव न्यासोक्तेः। अतोऽपि नास्य महामन्त्रत्वम्। अथ ध्यानप्रकारमाह **इत्यात्मानमिति ।** इतिशब्दः मन्त्रसमाप्तिद्योतकः । आनन्तर्यार्थको वा । अत्र ध्येयं षट्शक्तिभिः उत्साहप्रभुमन्त्रज्ञानक्रियेच्छाशक्तिभिः । ऐश्वर्यादिभिर्वा । ज्ञानैश्वर्यादिभिर्वा युतं अत एव परं सर्वजीवविलक्षणं सर्वगुणपूर्णं वा सर्वपालकं वा आत्मानं सर्वव्यापकं स्वभक्तग्राहिणं वा स्वातन्त्र्येण जीवे स्थित्वा सर्वविषयभोक्तारं वा नित्यरूपं वा विष्णुम्। यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तेनात्मेति च भण्यत इत्युक्तेः । **विद्यातेजस्तपोमूर्तिरिति ।** विद्या ज्ञानं तेजः प्रकाशः । तप आलोचनं एतन्मयी मूर्तिः शरीरं यस्य स इति। एवं प्रकारेण ध्यायेत्। यद्वा विद्यातेजोभ्यां ज्ञानप्रभावाभ्यां तापयति प्रतिपक्षानिति तथाविधामूर्तिर्यस्य । अथवा स्वयं साधकः विद्यातेजस्तपोमूर्तिः सन् विद्या नारायणमन्त्रजा वर्णन्यासेन सञ्जातज्ञानम्। तेजः वासुदेवमन्त्रवर्णन्यासजन्यं सामर्थ्यम्। तपः विष्णुमन्त्रवर्णन्यासजन्यं शत्रुतापकत्वम् । तैर्युक्ता मूर्तिः देहो यस्य तथाविधो भूत्वेत्यर्थः। इमं वक्ष्यमाणं मन्त्रं ॐ हरिर्विदध्यादित्यादि स्वतेजसाग्रस्तसमस्ततेजा इत्यन्तं नारायणवर्मात्मकं मन्त्रं उदाहरेत् कीर्तयेत् ॥ ११ ॥

प्रतिश्लोकं गायत्रीवर्णबीजपुरस्कारेण पाठे अस्य साफल्यं तदशक्तौ तद्व्याख्यानरूपविष्णुगायत्रीप्रोक्तमन्त्रत्रयवर्णबीजसाहित्येनैव पाठे सफलत्वं नान्यथेति ज्ञापयितुं आद्यपादोक्तनारायणमन्त्राद्यवर्णं प्रथमश्लोकादौ निदर्शयति ॐमिति ।

**ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः पतगेन्द्रपृष्ठे ।**
**दरारिचर्मासि गदेषु चाप पाशान्दधानोष्टगुणोष्टबाहुः ॥ १२ ॥**

एवं पूर्वाष्टश्लोकेषु नारायणमन्त्राष्टाक्षराण्यादौ बीजरूपेण योज्यानीति भावः । ॐमित्याकारकाद्यवर्णस्य देवतां ब्रुवन् स्वरक्षायां तत्प्रार्थनं पारोक्ष्येणाह हरिरिति । ॐकाररूपस्याष्टाक्षराद्यवर्णस्य हरिर्देवता ज्ञेयेत्याशयः । अत एव वैदिका वेदारम्भे हरिः ॐ इति पठन्ति । हरिर्मम सर्वरक्षां सर्वतः देशमनोविकारादिकालवस्तुभ्यो रक्षणं विदध्यात् कुर्यात् । अर्कमर्कटमण्डूकेत्यादिना हरिशब्दस्य दशवाचकत्वात्कोऽसौ हरिरित्याकाङ्क्षायां बाह्याभ्यन्तरशत्रुतो रक्षणे च रक्षकस्य यानायुधैर्विना न दाक्ष्यं स्यादित्यतश्चार्कादिव्यावर्तकैर्यानायुधसमर्पकैश्च विशेषणैर्विशिनष्टि न्यस्तेति । पतगेन्द्रपृष्ठे गरुडस्कन्धे न्यस्तांघ्रिपद्मः न्यस्ताः स्थापिताः अंघ्रिपद्माः येन सः । अत्रांघ्रिशब्देन ऊरू गृह्येते । ऊरूसुपर्णभुजयोरधिशोभमानावित्युक्तेः । पद्माशब्देन रमा च । लक्ष्मीः पद्मालया पद्मा इत्यभिधानात् । न च गरुडपृष्ठे पादस्थापनं युक्तम् । नापि पद्माकारत्वमूर्वोः । दरः शङ्खः अरि चक्रं चर्म खेटं असिः खड्गः गदा प्रसिद्धा इषुः बाणः चापो धनुः पाशो बन्धनं एतान् दधानः । प्रतिश्लोकं बीजाक्षरदेवतानामेकैकमायुधं नियतमिति ज्ञेयम् । अत एव हरेरनन्तबाहुत्वेऽपि अष्टबाहुत्वमुच्यते । अष्टगुणः स्रष्टृत्वाद्यष्टलक्षणः व्याप्तगुणो वा । अभूङ्व्याप्ताविति धातोः । यद्वा अष्टः भुक्तः गुणः शुभमेव

येन सः। अशु भोजन इति धातोः। शुभं पिबत्यसौ नित्यमिति च। अणिमादिसिद्धिमान्वा। अथवा यानायुधसमर्पकविशेषणदानेन हरिशब्दवाच्यस्य विष्णुत्वे सिद्धेऽपि अवतारविशेषसिद्धिः कथमित्यतः हरिशब्देनैव सिंहाकृतौ सिद्धायामपि लिङ्गतोऽपि विवक्षुराह **अष्टगुण इति।** अष्ट गावः अक्षीणि यस्य सोऽष्टगुः ब्रह्मा। गौरक्षिण स्वर्गवारिणोरित्यभिधानात्। तं णयति स्वदत्तवररक्षणेन आनन्दयति स तथा। णश्च निर्वृतिवाचक इत्युक्तेः। यद्वा तन्त्रसारोक्तद्वात्रिंशदक्षरनृसिंहमन्त्रे नृसिंहस्याष्टानामेव विशेषणानामुक्तेरष्टगुणः। मन्त्रश्च। उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम्। नृसिंहं भीषणं भद्र मृत्युर्मृत्युं नमाम्यहमिति। अष्टबाहुत्वमपि नृसिंह एवोपपन्नम्। मेघं करादिक्षेत्रेषु अष्टबाहुत्वदर्शनात्। यद्वा। अष्टौ दिग्गजान् बाधते स तथा। बाधृ विलोडने। अ च उ। हश्चान्त्यादेशः। निह्रादभीतादिगिभाजहुर्दिश इत्युक्तेः॥ १२ ॥

नकारदेवताः सूचयन् त्रिभिः देशरक्षामाकांक्षन् तावज्जलादिरक्षां प्रार्थयति **जलेष्विति।**

**जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात्।**
**स्थले च मायाबटुवामनोऽव्यात्त्रिविक्रमः खेऽवतु विश्वरूपः ॥ १३**

जलस्य समुद्राद्युपाधिभेदेन बहुत्वाद्बहुवचनम्। मत्स्यमूर्तिः मथ्नातीति मत् ब्रह्मधर्षणेन वेदहरणाद्धयग्रीवासुरः तं स्यति नाशयति सा तथा। मथ विलोडन इति धातोः। यद्वा मत्ति सदा सुखं प्राप्नोति सा। मदि हर्षे ततः स्यः। तादृशी मूर्तिर्यस्य सः। जलेषु समुद्रनद्याद्युपाधिकजलेषु यादोगणेभ्यः नक्रादिसङ्घेभ्यः वरुणस्य पाशाच्च मां रक्षतु। स्थले भूप्रदेशे च मायाबटुवामनः मायया स्वेच्छया बटुर्ब्रह्मचारी वामनो ह्रस्वरूपश्चाव्यात्

रक्षेत्। खे आकाशो विश्वरूपः स्थूलदेहः त्रिविक्रमः त्रीन् भूर्भुवःस्वर्लोकान् विक्रमतिपादक्षेपेणाक्रामतीति तथारूपः अवतु रक्षतु । मत्स्यस्य जलस्थत्वात् वामनस्य भूम्याक्रमणात् विश्वरूपस्य चाकाशाभिमानि गणेशास्थत्वात् जलस्थलखेषु रक्षणं युक्तमिति भावः। अनेन नकारस्य मत्स्यवामनत्रिविक्रमाः देवताः उक्ता भवन्ति ॥ १३ ॥

अथ मो वर्णदेवतां दुर्गादिषु रक्षार्थं प्रार्थयति दुर्गेष्विति।

**दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहो सुरयूथपारिः।**
**विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥ १४ ॥**

प्रभुः समर्थः। यद्वा प्रकटो भवतीति तथाविधः। मन्दमोहायापि न मातापितृजात इत्यर्थः। असुराणां यूथानि पान्ति तेषामरिर्घातकः। यद्वा असुर एव यूथपो गजस्तस्यारिः। अथवा सुरयूथपानां इन्द्रादीनां अरिः शत्रुः हिरण्यकशिपुः नास्ति स यस्मात्सः। नृसिंहः नृणां जीवानां सिं बन्धं हन्ति सः। नृशब्दो जीववाची स्यात्सिशब्दो बन्धवाचकः। नृसिं हन्ता नृसिंहोऽयं जीवबन्धविनाशक इत्युक्तेः। उभयाकारो वा। अटवी दुर्गमं वनं आजिमुखं युद्धाग्रन्तेआदी येषां तेषु दुर्गेषु दुष्प्रवेशास्थानेषु पायाद्रक्षेत्। एकः क्षकारदेवता नृसिंहः। चतुर्विंशतिमूर्तिस्थोऽन्यः। दशावतारगतोऽपरः। एवमनेकनृसिंहाभिधेयसद्भावे को नृसिंहोऽत्राभिप्रेत इत्यतः तदसाधारणं धर्ममाह विमुञ्चत इति। यस्य नृसिंहस्य महाट्टहासं महान्तं सिंहनादं विमुञ्चतः सृजतः सतः दिशो विनेदुः प्रत्यगर्जन्। गर्भाश्च असुरस्त्रीणामिति शेषः। न्यपतन्निपेतुः। स नृसिंह इत्यन्वयः। अटव्यां नारसिंहश्चेत्युक्तेर्युक्तमिदम् ॥ १४ ॥

अथ नाकारदेवान् अध्वाऽद्यादौ रक्षार्थं प्रार्थयति रक्षत्विति।

**रक्षत्वसौ मा ध्वनियज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ।**
**रामोऽद्रिकूटेष्वथ विप्रवासे स लक्ष्मणोऽव्याद्भरताग्रजो माम् ॥ १५ ॥**

यत्कल्पे वयं स्थिताः असौ स इत्यर्थः । यद्वा असौ प्राणे खड्गे वा स्थितः यज्ञकल्पः २ = वराहभार्गवराघवान् = २ स्वाङ्गजैः कुशादिभिः यज्ञकल्पकः । स्वस्य दंष्ट्रया उन्नीता उद्धृता धरा भूमिर्येन स वराहः वरं सर्वोत्कर्षं न हिनस्तीति तथाविधः मा मां अध्वनि ऊर्ध्वलोकमार्गे रक्षतु । दंष्ट्रोन्नीतधरत्वस्य ऊर्ध्वगामिनि वराहे एवौचित्यात् तस्याध्वनिरक्षाप्रार्थनं युक्तम् । रामः रमित्यस्याग्निबीजत्वेन रं अग्निं अमति गच्छति सः । अम गतौ । अग्न्यन्तर्गतत्वात् भार्गवः । अथ कार्त्स्न्येन । अद्रिकूटेषु गिरिशृङ्गेषु । वज्रतुल्यपरशुधारित्वादिति भावः । रक्षत्विति पूर्वेणान्वयः । सलक्ष्मणः भरताग्रजः राघवो रामः विप्रवासे विविधप्रवासस्थाने अव्यात् पायात् । प्रोषितरामस्य प्रवासे रक्षाप्रार्थनं युक्तम् ॥ १५ ॥

एवं देशरक्षायां ॐमादिचतुर्वर्णदेवताः संप्रार्थ्य इदानीं राशब्ददेवताचतुष्टयं मनोविकारादेः रक्षार्थं प्रार्थयति मामिति ।

**मामुग्रधन्वा अखिलप्रमादान्नारायणः पातु नरश्च हासात् ।**
**दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबन्धात् ॥ १६ ॥**

उग्रं दारुणं धन्वधनुर्यस्य सः । यद्वा उग्रात् दाहकत्वेनोग्रस्वभावात् अग्नेर्धन्व यस्य सः । पृथु संनिहित रूप इत्यर्थः । अग्निराजगवं चापमिति चतुर्थस्कन्धोक्तेः । अखिलप्रमादात् सर्वविषयानवधानतायाः । अत्र सन्धिश्छान्दसः । ऐहिकामुष्मिकयोः परमसावधानत्वादिति भावः । क्षयरहितत्वान्नरः । रीं क्षय इति धातोः । नुरिदं परमकर्मत्वेन तपो नारं तदाश्रयत्वान्नारायणश्च हासाद्विनोदाद्युपहासात् । सर्वदा तपः प्रियत्वेन

जितहासत्वादिति भावः। योगनाथः अष्टाङ्गयोगप्रवर्तकः। दत्तः दत्तमत्रये पुत्रत्वेन स्वदानमस्यास्तीति। अर्श आद्यच्। अयोगात् चित्तनिरोध-वैकल्यात्। क्वचिद्योग उपायः स्यात्क्वचिच्चित्तनिरोधनमित्युक्तेः। योगनाथत्वादिति भावः। गुणेशः त्रिगुणनियन्ता। कपिलः कं मोक्षसुखं पिबन्ति अनुभवन्ति ते कपयः मुक्ताः तान् लाति स्वीकरोतीति स तथा। ला आदाने। अथ कृत्स्नात्। मङ्गलानन्तरारम्भ प्रश्नकार्त्स्न्येष्वथो अथेत्यभिधानात्। कर्मबन्धात् कर्मरूपबन्धात्। निष्कर्मत्वादिति भावः॥ १६॥

यद्देवताचतुष्टयं प्रार्थयति सनत्कुमार इति।

**सनत्कुमारोऽवतु कामदेवाद्धयशीर्षो मां पथि देवहेलनात्।**
**देवर्षिवर्यः पुरुषान्तरार्चनात्कूर्मो हरिर्मां निरयादशेषात् ॥ १७ ॥**

सनत्कुमारनामा तु ब्रह्मचर्यवपुर्हरिः। सनत्कुमारमपरं ब्रह्मपुत्रं विवेशयः॥ स मां योग्येतरात्कामात्पातु विश्वेश्वरः प्रभुरिति तात्पर्योक्ते-र्ब्रह्मपुत्रसनत्कुमाराविष्टः सनत्कुमारः सनत्कुभ्यः पुरातनकुत्सितासुरेभ्यः मां विष्णुविषयज्ञानं अराति न ददाति इति निरुक्तेस्तन्नामा विष्णुः। रा दान इति धातोः। कामदेवात् कामान् अयोग्यमद्यादि विषयान् देवयति गमयति आत्मानमिति। अयोग्यमनोरथादित्यर्थः। जितकामत्वादिति भावः। हयशीर्षो हयग्रीवः पथि ज्ञानमार्गभूतवेदादौ देवहेलनात् देवस्य विष्णोः हेळनात् दोषारोपणात्। हरेर्निर्दोषत्वप्रतिपादक वेदहारित्वादिति भावः। देवर्षिवर्यः देवर्षीणां नारदादीनां वर्यः श्रेष्ठः महिदासाख्यो विष्णुः। महिदासोऽथ देवर्षिः पातु मां विष्णुरव्ययः। तदनर्पितकर्मभ्य-स्तदस्मरणतस्तथेति तात्पर्योक्तेः। पुरुषान्तरार्चनात् पुरुषान्तरस्य

विष्वन्यस्य अर्चनात् परिवारत्वमन्तरेण प्राधान्येन पूजनात्। तस्यैतरेयोपनिषदि विष्णुमुख्यपूज्यत्ववक्तृत्वादिति भावः। कूर्मः कोर्भूमेः सकाशात् उर्वी महती मामितिर्यस्य स हरिः अशेषात् सर्वस्मान्निरयात् यातनागृहात्। निमज्जतामाश्रयदानसामर्थ्यादित्यर्थः ॥ १७ ॥

णा शब्ददेवता चतुष्टयं रक्षार्थं प्रार्थयति **धन्वन्तरिरिति।**

**धन्वन्तरिर्भगवान्पात्वपथ्याद् द्वन्द्वाद्भयादृषभो निर्जितात्मा।**
**यज्ञश्च लोकादुत तत्कृतान्नो बलो गणात्क्रोधवशादहीन्द्रः ॥ १८ ॥**

भगवान् षड्गुणैश्वर्यवान् धन्वन्तरिः धन्वन्तानां धनुर्वातान्तानां रोगाणाम्। अत्र स्वरादिलोपे पृषोदरादित्वात्। क्षयकारित्वात् धन्वन्तरिनामा। रीं क्षय इति धातोः। अपथ्यात् रोगजनकवस्तुभक्षणात्। भिषक्त्वादिति भावः। निर्जितात्मा वशीकृतेन्द्रियग्रामः ऋषभः ऋष ज्ञाने ततो भच्। सर्वज्ञ इत्यर्थः। द्वन्द्वात् रागद्वेषादेः उत्पन्नादिति शेषः भयात्। निर्जितात्मत्वेन द्वन्द्वसहिष्णुत्वात्। यज्ञः ईज्यमानत्वात् तदाख्यकर्मप्रवर्तकाद्वा तन्नामा। तत्कृतात् यज्ञकर्मापादितात् लोकात् अनित्यफलात् स्वर्गादेः। यद्वा तदेव स्वर्गाद्येव कृतं कुशलं यस्मिन् तस्माल्लोकात् ज्ञानात्। श्लुक् प्रकाश इति धातोः। अथवा कृतं यज्ञाद्यापादितमप्यन्नं भोग्यं यस्मात्स यज्ञः। उत वा तदर्थमेव कृतं कर्म येषां तान् नः। चशब्दादलोकादधः प्राप्तेरित्यर्थः। उतशब्दात् अतत्कृतान्निष्फलयज्ञादित्यर्थः। अयज्ञस्यानेकपुंसाध्यत्वेन यथायोग्यफलवतामपि बहुत्वादत्रैव बहुवचनम्। बलो बलिष्ठः अहीन्द्रः शेषान्तर्यामी सङ्कर्षणः क्रोधवशात् कोपाधीनात् गणात् सर्पादेः। यद्वा शेषावतार बलभद्राविष्टः। अहीन्द्रत्वादिति भावः ॥ १८ ॥

यद्देवतात्रयं प्रार्थयति **द्वैपायन इति।**

द्वैपायनो भगवान्संप्रमोहाद् बुद्धस्तु पाषण्डगणात्प्रवादात् ।
कल्की कलेः कालमलात्प्रपातु धर्मावनायोरु कृतावतारः ॥ १९ ॥

श्वेतद्वीपायनावतारत्वाद्यमुना द्वीपस्थाद्वा द्वयोः सुखदुःखयोः भोजयितृत्वाद्वा द्वैपायननामा । संप्रमोहात् समभेदे समीचीने सुष्टु पूजासुखेषु चेति यादवात् सं अभेदविषयः प्रमोहो यस्मात् तस्माच्छास्त्रात् । भेदविषयकसदागमप्रणेतृत्वादिति भावः । तुशब्दः पाषण्डानामाप्तवद्वर्तमानोऽपीत्यर्थः । बुद्धः स्वयमेव प्रबुद्धः नान्यस्ववंश्यानां याथार्थ्यबोधकः । यद्वा अयमस्मदाप्त इति स्ववंश्यैर्ज्ञातः । पाषण्डगणात् पाषण्डगणोत्थात् प्रवादात् विवादात् । प्रमादादिति पाठस्तु चिन्त्यः । आगतपूर्वत्वात् । देवदैत्यबोधमोहदत्वादिति भावः । धर्मावनाय धर्मरक्षणाय उरुधा बहुधा बहवो वा कृताः अवताराः येन स कल्की कल छेदन इति धातोरधार्मिकछेदी कलेः कलियुगसंबन्धिनः कालमलात् समयोत्थपातकात् प्रपातु । धर्मविवर्धनरूपत्वादिति भावः । अनेन सर्वभागवतप्रतिपाद्यत्वेन प्रथमस्कन्धोक्तद्वाविंशतिरूपाणामेवात्र कीर्तितत्वात्सर्वभागवतसारमिदमित्युक्तं भवति । न चात्र तत्रोक्तमोहिनीरूपस्यानुक्तेरयुक्तत्वम् । त्रिविक्रमविश्वरूपशब्दाभ्यां तस्यापि सूचितत्वात् । तथाहि । त्रीन् वसुरुद्रादित्यान् विक्रमयति पराक्रमयुक्तान् करोति स तथा । यद्वा । त्रीन् दैत्यदानवसौरसान् मोहकशक्तिरूपविशेषेण क्रमति वशीकरोति स तथा । विश्वं सर्वं रूपसौदर्यं यस्मिन् स तथा । रूपं रौप्ये च सौन्दर्ये प्रतिमायां च वर्णक इत्यभिधानात् । मोहिनीरूप इत्यर्थः । नापि तत्रानुक्तहयग्रीवस्यात्रोक्त्या आधिक्यापातेन अयुक्तत्वम् । सप्तमस्कन्धे प्रह्लादोक्तस्तोत्रे अभिहितत्वात् देवहेलनरक्षादक्षत्वेन आवश्यकत्वाच्च ॥ १९ ॥

एवमष्टश्लोकैर्गायत्रीपूर्वपादव्याख्यानरूपविष्णुगायत्र्याद्यपादोक्तनारायणमन्त्रवर्णदैवतरूपाणि देशमनोविकारादि रक्षार्थं प्रार्थ्य इदानीं द्वितीयपादव्याख्यानोक्तवासुदेवमन्त्रवर्णदैवतरूपाणि कालक्रमस्यैव प्राधान्याङ्गीकारेण वर्णदेवताक्रमं तत्तत्कालोचितत्वाद्व्यत्यस्य कालरक्षार्थं प्रार्थयन्पूर्वं प्रातारक्षार्थं प्रथमोङ्कारदैवतं केशवं प्रार्थयति मामिति।

**मां केशवो गदया प्रातरव्याद् गोविन्द आसङ्गव आत्तवेणुः।**
**नारायणः प्राण्ह उदात्तशक्तिर्मध्यन्दिने विष्णुररीन्द्रपाणिः ॥ २० ॥**

अत्र श्लोकत्रयेणैव द्वादशदेवताग्रहणात्प्रतिश्लोकं मन्त्राक्षर-बीजोपन्यासायोगेन पदन्यासस्यैवौचित्ये चतुष्पदेषु मध्ये प्रथमपदौङ्कारस्य सर्वपदेष्वनुगतत्वादवशिष्टपदत्रयं प्रत्येकं प्रतिश्लोकं योज्यम्। आद्यश्लोके ॐकारेण समन्त्रावयवश्लोकानां पाठस्य सफलत्वसूचनात्। तद्यथा। ॐ नम इत्याद्ये। ॐ भगवत इति द्वितीये। ॐ वासुदेवायेति तृतीय इति। केशवः ॐकारदेवः। द्वादशार्णानां केशवाद्याश्च देवता इति तन्त्रसारोक्तेः। गदया गदायुधेन करणेन। इत्थंभूतत्वेन वा। प्रातः द्वादशधा विभक्तस्य अहोरात्रस्य पूर्वांशो। एवमग्रे एकादशकालाः ज्ञेयाः। यद्वा पञ्चधा विभक्तस्य दिनस्याद्यांशो अव्यात्। अत्रायं विशेषः। आदौ ॐ नमः ॐ मां केशवो गदया प्रातरव्यादिति पठनीयम्। आत्तवेणुः वेणुधारी भकारदैवतो गोविन्दः। आसङ्गवे आसमन्तात् सर्वगोष्ठेभ्यो निर्गत्यैकत्र संयुज्यन्ते गावो यस्मिन् तस्मिन् उक्तद्वितीयांशो इत्यर्थः। अत्रादौ भं इति बीजं योज्यमित्याशयः। उदात्तशक्तिः उद्यतशक्त्यायुधः सर्वोत्कर्षेण स्वीकृतबलो वा नकारदैवतो नारायणः। प्राण्हे त्रेधाविभक्तदिनस्य प्रथमभागे। अत्र नं इति बीजम्। ननु प्रातः सङ्गवशब्दाभ्यां तत्कालस्य ग्रहणादस्य वैयर्थ्यम्। न च पर्यावर्तनात्प्राक् मध्याह्नकालग्राहित्वमस्य। तस्य मध्याह्नशब्देनैव गृहीतत्वात्।

उत्तरकालस्यैव मध्याह्नवाचित्वे अनुशासनाभावाच्च। नापि माध्याह्नशब्दस्य पर्यावर्तनमात्रपरत्वेन तत्पूर्वकालवाचित्वं युक्तम्। तदुत्तरकालस्यानुक्त्या तत्र रक्षणाभावापातात्। तस्यापराण्हेऽन्तर्भाव इति चेन्न। अपराण्हस्यैवाधिक्यापातात्। अस्त्विति चेन्न। त्रेधा पञ्चधा चेत्कभयथाविभक्ते दिने पर्यावर्तनोत्तरकालस्य अपराण्हसंज्ञाभावात्। प्राण्हवन्माध्याह्निकस्य पर्यावर्तनोत्तरभागस्यापराण्हान्तरत्वमङ्गीकुर्म इति चेन्न। उक्त्यभावात्। द्वादशसंख्याभङ्गप्रसङ्गाच्चेति। मैवम्। अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणमित्यत्र यथा दैवतभेदेन षण्मासोत्तरायणयोर्ग्रहणम्। तथाऽत्रापि देवताभेदेन ग्रहणौचित्यात्। मकरमेषाभ्यामुत्तरायणप्रवृत्त्या मेषप्रवृत्तस्य षण्माससंज्ञौचित्यात् मकरप्रवृत्तस्य च उत्तरायणसंज्ञौचित्यात् अस्तु तत्र युक्तत्वम्। अत्र मास्तु तथा भावादिति चेन्न। अत्रापि त्रिधा पञ्चधेति विभागद्वयस्य शास्त्रसिद्धत्वेन न्यायसाम्यात्। न च नारायणः पातु सदात्तशक्तिरिति पाठान्तरं युक्तम्। पुराणानेक स्वसंमतपुस्तकेष्वनुपलम्भात्। द्वादशनामभिरेकादशकाल-रक्षाप्रार्थनापत्तेश्च। नापि प्रभातशब्देन पूर्तिः। तस्य प्रातः पर्यायत्वेन पुनरुक्तापातात्। विजयध्वजतीर्थैस्तस्यासन्नार्कोदय कालार्थकत्वेनाङ्गी-कारान्न पुनरुक्ततेति चेन्न। तेषामभिप्रायान्तरसद्भावात्। अन्यथा प्रातरारभ्य पञ्चभिः पञ्चभिः घटिकाभिः अहोरात्रविभागं कृत्वा इत्युक्तेर्विरुद्धत्व-प्रसङ्गात्। प्राण्हशब्दानङ्गीकारे त्रयोदशकालाभावेन न विरोध इति चेन्न। तथात्वे मध्याह्नरक्षायामेव नारायणविष्ण्वोरुभयोः प्रार्थनप्रसङ्गात्। विष्णोरपराह्णरक्षार्थं प्रार्थनान्नेति चेन्न। तथोत्तरोत्तराङ्गीकारेऽपि त्रिविक्रममाधवयोर्दोषरक्षाप्रार्थनानपगमात्। तर्हि प्रभातशब्दस्य का गतिरिति चेत्तत्रैव वक्ष्यामः। तस्माद्युक्तमुक्तम्। अरीन्द्रपाणिः अन्यचक्रोत्तम

सुदर्शनकरः गकारदैवतो विष्णुः मध्यन्दिने मध्याह्ने अव्यादिति तु सर्वत्र। अत्रादौ गं इति बीजं ज्ञेयम् ॥ २० ॥

**देवोऽपराण्हे मधुहोग्रधन्वा सायं त्रिधामावतु माधवो माम्।**
**दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ २१ ॥**

पूर्वमन्त्रस्य पदानां क्रमविवक्षया आदौ पाठ्यत्वमुक्तम्। तेनैतच्छ्लोकादौ ॐ भगवत इति सिद्ध्यति। गायत्रीद्वितीयपाद-पदक्रमानुसारेणैतन्मन्त्रान्वयविवक्षायां तु भर्गः शब्दव्याख्यानरूप भगवते इति शब्दस्य चतुरक्षरत्वात् मां केशव इत्यादिश्लोके च चतुष्कालग्रहणात् तत्र तद्योजना। देवोपराह्ण इति श्लोके तु पञ्चकालानां ग्रहणात् देवस्येतिपदव्याख्यानरूपस्य पञ्चाक्षरस्य वासुदेवायेतिपदस्य योजना। श्रीवत्सलक्ष्म्येति श्लोके कालत्रयस्य ग्रहणात् धीमहीतिपद-व्याख्यानरूपस्य ॐ नम इत्यक्षरत्रयात्मकपदस्य योजना द्रष्टव्या। एतत्पक्षे अस्मिंश्लोके आदौ ॐ वासुदेवायेति योज्यम्। गायत्रीद्वितीयपादे देवशब्दसत्त्वादस्मिन्नपि पद्ये देवशब्दोक्तिरतोऽप्येतदर्थसिद्धिर्भवति। अत्रादौ बीजाक्षरन्तु वमिति। देवः एतत्कालनियन्तोग्रधन्वा शार्ङ्गधन्वा मधुहा वकारदेवो मधुसूदनः। अपराण्हे दिनचतुर्थभागे अवत्विति उत्तरतोऽत्रानुकर्षणीयम्। त्रिधामा त्रयो लोकाः धामानि पादनिक्षेपस्थानानि यस्य सः ते शब्ददेवः त्रिविक्रम इत्यर्थः। सायं सायाह्ने दिनपञ्चमभागे। तेमित्यत्र बीजम्। माधवः मोकारदेवः। दोषे प्रदोषकाले मामवतु। अत्र मोमिति बीजम्। देकारदेवता हृषीकेशः उतशब्दः अर्धरात्रनिशीथयोर्विशेषद्योतकः। अर्धरात्रे सामीप्यार्थे सप्तमीयं अर्धरात्रस्य निशीथात्पूर्वग्रहणात् निशीथात्पूर्वं समीपवर्तिकाले। यद्वा। रात्रे स्त्रियामत्वेन प्रसिद्धत्वात् तदर्धकाले सार्धप्रहरात्मके काले इत्यर्थः। अथवा

दिनवत्पञ्चधाविभक्तरात्रिद्वितीयांशे। अत्र देमिति बीजम्। एके मुख्यान्यकेवला इत्युक्तेरेकः वामननियम्यवाशब्दादन्यवाशब्ददेवः। सर्वचेतनान्य वाकारदैवतः पद्मनाभ इत्यर्थः। निशीथे मध्यरात्रे तृतीयभागे वा अवतु। अत्र वामिति बीजमवगन्तव्यम्॥ २१॥

श्रीवत्सलक्ष्म्यापररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः।
दामोदरोऽव्यादनुसन्ध्यं प्रभाते विष्णुः श्रीमान्भगवान्कालमूर्तिः॥ २२

अत्रादौ वासुदेवायेतिपदं ॐ नम इति वा पठित्वा सुमिति बीजाक्षरं योज्यम्। ईशः तत्कालनियन्ता श्रीवत्सलक्ष्म्या सुशब्ददेवः श्रीधरः। अपररात्रे निशीथप्रत्यूषसोर्मध्यकाले अव्यादित्यनुकर्षणीयम्। ईशः ऊषः कालनियन्ता वा शब्देशो वा असिधरः तत्कालविहितकर्मप्रतिबन्धक-प्रमादालस्यादिमद्भिभीषिकार्थं खड्गधरः जनार्दनः न जायते मातृपितृसंयोगाच्छुक्रशोणितसम्बन्धेन नोत्पद्यत इति जनः। पृषोदरादित्वात्साधुः। अर्दयति याचते बलिं प्रति त्रिपादभूमिमित्यर्दनः। जनश्चासावर्दनश्चेति समासः। अर्द गतौ याचने चेति धातोः। स भूतः स जनार्दनः स ह्यासीत्स नासीत्सोर्दयदिति गीताभाष्योक्तश्रुतेः। यद्वा प्रादुर्भावो हरेर्जनिरित्यनुव्याख्यानोक्तेः जनि प्रादुर्भाव इति धातोश्च जन्यते अवतीर्णो भवति स जनः सचासावर्दनो याचकश्चेति। स्वयमीशोऽपि सन् जनवत् लोकवत् याचको वा। अथवा अजनार्दन इति पदं प्रश्लिष्य जनविलक्षणो याचक इत्यर्थः। ब्रह्मप्रार्थ्यो वा नित्यवेदज्ञेयो वा। वामन इत्यर्थः। प्रत्यूषे रात्रिपञ्चमभागमध्ये पञ्चपञ्चाशन्नाडीप्रभृतिचतुर्घटिकात्मके काले अव्यात्। अत्र वामिति बीजं बोध्यम्। दामोदरो यकारदेवः। अनुसन्ध्यं सन्ध्यानिकटे सूर्योदयसन्निकृष्टे प्रभाते घटिद्वयात्मकपूर्वकाले। अष्ट पञ्च भवेत्प्रातः शेषः सूर्योदयः स्मृत इत्युक्तेः। अव्यात्। अत्र यमिति बीजं ज्ञेयम्। ननु

द्वादशमूर्त्यात्मकस्य वासुदेवस्य कालरक्षणशक्तिः कुत इत्यत आह **विष्णुरिति।** व्यापकार्थकत्वेन ॐकारार्थो विष्णुशब्दः। भगवानिति तु भगवत इतिशब्दस्य अनुवादः। श्रीमानिति तु वासुदेवायेत्यस्यार्थः। वासशीलत्वाद्वासोः श्रियः देवत्वेन तद्वत्वात्। एतन्मन्त्रप्रतिपाद्यः कालमूर्तिः कालो मूर्तिः प्रतिमा यस्य तथा। तदन्तःस्थत्वेन नियामक इत्यर्थः। यद्वा। ननु वासुदेवस्यायुधधारणविशेषेणैव केशवादिमूर्तिसिद्धौ कालरक्षकत्वमस्याप्यायुधानामेव न मूलरूपस्य सेत्स्यतीत्यत आह **विष्णुरिति।** कालमूर्तिः कल च्छेदने कल बन्धने कल शब्दे इत्येतेभ्यः छेदकत्वाच्चक्रासिगदायुधानि। अन्यप्रहारप्रतिबन्धकत्वाच्चर्म। शब्दकारित्वाच्छङ्खः। एतानि कलशब्दवाच्यानि तानि मूर्तयो यस्य सः। तदन्तर्गतत्वादपि रक्षकत्वं तस्यैवेति भावः। विष्ण्वादिपदानां दामोदरविशेषणत्वेन अस्तीति शेषेण वा। यद्वा स्वसाक्षाद्दर्शनानर्हाणां उक्तरीत्यैतद्धर्मधारकाणां दर्शनावश्यकत्वात्। अग्रे मध्यमपुरुषप्रयोगेण शस्त्राणामाभिमुख्यलाभाच्चाविर्भवतीति शेषेणान्वयः॥ २२॥

एवं कालरक्षार्थं वासुदेवमन्त्रवर्णदेवताः संप्रार्थ्य मन्त्रपदेष्वपि वासुदेवायेत्यस्य विशेष्यत्वेन प्राधान्यात्पुनस्तद्वर्णदेवता प्रतिमास्थानीय पञ्चायुधानि शत्रुतो रक्षार्थं आभिमुख्येन प्रार्थयन् आदौ तद्रूपनिरूपणपूर्वकं चक्रमन्तः शत्रुसैन्यहननार्थं प्रार्थयति **चक्रमिति।**

**चक्रं युगान्तानलतिग्मनेमिभ्रमत्समन्ताद्भगवत्प्रयुक्तम्।**
**दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥ २३॥**

अत्रादौ वामिति बीजं योज्यम्। युगान्तानलतिग्मनेमि युगान्तः प्रलयकालस्तत्सम्बन्धीयोऽनलोऽग्निस्तद्वत्। तिग्माः कर्कशाः नेमयः अराः

यस्य तथाविधं समन्तात् सर्वतोभ्रमत् चंक्रममाणं चक्रं सुदर्शनाख्यं रथाङ्गं भगवत्प्रयुक्तं भगवता विष्णुना प्रयुक्तं प्रेषितं यतोतस्त्वां प्रार्थयामीति शेषः । किं प्रार्थयस इत्यत आह । हे सुदर्शन त्वं यथा वातसखः वायुसहायः हुताशो दावाग्निः कक्षं शुष्कतृणवनं दहति एवं अरिसैन्यं अरीणां कामक्रोधमदमत्सरदंभाहङ्काराणां सैन्यं विषयानलं बुद्धिहिंसागर्वखेद-मानाभिमानादिसेनासङ्घं आशु शीघ्रं दन्दग्धि अतिशयेन पुनः पुनर्दह । प्रमत्ते मयि तस्य पुनः पुनरुत्पद्यमानत्वादिति भावः ॥ २३ ॥

अथ साधारणासाधारणाहितमध्ये साधारणदैविकाहितेभ्यो रक्षार्थं गदाख्यवासुदेवप्रतिमां सांमुख्येन प्रार्थयति गद इति ।

**गदेशनिस्पर्शनविष्फुलिङ्गे निष्पिंढि निष्पिंढ्यजितप्रियासि ।**
**कूश्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णयचूर्णयारीन् ॥ २४ ॥**

अत्रादौ सुमिति बीजं योज्यम् । अशनि स्पर्शन विस्फुलिङ्गे अशनेः वज्रस्य स्पर्शनात् संघट्टनात् विस्फुलिङ्गाः अग्निकणा एव यस्याः सा । तेनापि अभेद्येत्यर्थः । यद्वा स्पृश उपताप इति धातोरशनेर्विद्युत इव स्पर्शनाः तापकाः विष्फुलिङ्गाः यस्यास्तत्संबुद्धिः । तादृशि हे गदे त्वं अजितप्रिया विष्णुप्रिया असि अत इति शेषः । कूश्माण्डादीन् दैविकाहितान् निष्पिंढि निष्पिंढि पुनःपुनर्निष्पीडय । कूश्माण्डाः कुत्सितौश्मनि मुखे अण्डौ वृषणौ येषां ते तथाविधाः दैविकभूताः । वैनायकाः विघ्नराजाधीनाः विघ्नादयः । यक्षाः कुबेरानुचराः । रक्षांसि निर्ऋतेरनुचराः । भूताः रुद्रानुचराः । ग्रहाः राह्वादयः । किञ्च । आरीन् अस्य वासुदेवस्यारीन् शत्रून् । दैत्यानित्यर्थः । चूर्णय चूर्णय मुहुः पेषय ॥ २४ ॥

अथ साधारणमानुष्यकाहितेभ्यो रक्षार्थं शङ्खाख्यप्रतिमां प्रार्थयति त्वमिति।

**त्वं यातुधान प्रमथ प्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन्।**
**दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोरीह्णदयानि कंपयन् ॥ २५ ॥**

अत्रादौ देमिति बीजम्। हे दरेन्द्र अन्यशङ्खोत्तम पाञ्चजन्य कृष्णपूरितः कृष्णेन नियमेनाखिलजगत्कर्षकत्वाद्वासुदेवेन पूरितः मुखवायुनान्तर्गत्या वा पूरितः पूर्णीकृतः अत एव भीमस्वनः घोरशब्दस्त्वं तेषामिति शेषः। यातुधानादीनामित्यर्थः। हृदयानि मनांसि कंपयन् भीषयन् सन् अरीन् शत्रुत्वेन वर्तमानान् यातुधानादीन् मानुष्यकाहिता विद्रावय पलायन परान्कुरु। यातुधानाः बककिर्मीरादिसदृशाः। प्रमथाः बुद्धिभ्रमकारिणः। प्रेताः स्मशानवासाः। मातरः पूतनासदृशाः। पिशाचाः कर्मणा पिशाचत्वमाप्ताः। विप्रग्रहाः ब्रह्मराक्षसाः। घोरदृष्टयः भीमनेत्रपिशाच-विशेषाः। नेत्रविषाः सर्पा वा ॥ २५ ॥

अथासाधारणशत्रुनिबर्हणार्थं खड्गाख्यप्रतिमां प्रार्थयति त्वमिति।

**त्वं तिग्मधारासि वरारि सैन्यमीशप्रयुक्तो मम छिन्धि छिन्धि ॥ २६ ॥**

अत्रादौ वामिति बीजम्। हे तिग्मधार तीक्ष्णधार हे असिवर अन्यखड्गोत्तम नन्दकसंज्ञ त्वं ईशप्रयुक्तः श्रीविष्णुना प्रयुक्तः प्रेषितः प्रयोजितो वा सन् ममारिसैन्यं मदीयाहितसङ्घं छिन्धि छिन्धि भूयः छेदय। द्विपादोऽयं श्लोकः। चक्रादीनां चतुष्पादैः प्रार्थितत्वेऽप्यत्र पादद्वयेनैवासेः प्रार्थितत्वात्। किञ्च गायत्र्याद्यार्धर्चस्य षोडशाक्षरत्वेऽपि गणनया पञ्चदशानामेव लाभात् तद्व्याख्यानरूपस्यास्यैकछन्दस्कत्वेनार्धर्च-व्याख्यानरूपत्वनियमस्य प्रदर्शनार्थं पञ्चदशश्लोकानामेव निबद्धत्वेऽपि

व्याख्येयगायत्र्यां संयुक्ताक्षर एवाक्षरद्वयसिद्धिवत् अत्रापि आयुधद्वयप्रार्थनप्रदर्शनेन श्लोकद्वयोपपत्तेः। शत्रूणां असाधारण्यं तु ममेतिशब्दात् ज्ञेयम् ॥ २६ ॥

अथाहितदुष्टदृष्टिपातनिरसनार्थं चर्माख्यप्रतिमां प्रार्थयति चक्षूंषीति।

**चक्षूंषि चर्मंश्छतचन्द्रछादय द्विषामघं नो हर पाप चक्षुषाम् ॥ २७ ॥**

हे शतचन्द्र अनेकचन्द्राकारचिह्न हे चर्मन् नः अस्माकं द्विषां द्वेष्टृणां चक्षूंषि नेत्राणि छादय पिधेहि। तथा नः पापचक्षुषां पापरूपाणां नेत्राणां अघं त्वद्दर्शनप्रतिबन्धकं पापं हर अपाकुरु। यद्वा पापचक्षुषामिति [illegible]शेषणम्। अत्रादौ यमिति बीजं योज्यम् ॥ २७ ॥

इतःपरं गायत्र्युत्तरार्धर्चव्याख्यानरूपं श्लोकाष्टकं छन्दोभेदात्। अन्तिमे छन्दसोऽभेदस्तु अन्त्यव्यञ्जनद्योतनार्थः। तत्रोक्त यदस्मच्छब्दयोरत्र प्रयोगाच्च। अत्र प्रतिश्लोकं उत्तरार्धर्चव्याख्यानोक्तविष्णुमन्त्रसप्ताक्षराणि आदौ योज्यानि। तत्राप्याद्ये श्लोकद्वये ॐमित्येकमेव बीजम्। द्वयोरन्वयैक्यात्। अथ भयादिनिवृत्तिपूर्वकरक्षणं प्रार्थयन् आदौ द्वाभ्यां भयहेतुनाशं प्रार्थयते यदिति।

**यन्नोभयं ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च।**
**सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्यो घेभ्य एव च ॥ २८ ॥**

यत् भयं नः अस्माकं ग्रहादिभ्यः अभूदित्यन्वयः। चशब्दौ समुच्चयार्थौ। एवशब्दौ योगायोगव्यावृत्त्यर्थकौ। ग्रहादिपार्थक्यादेव सहैव वेत्यर्थः। ग्रहेभ्यो नवग्रहेभ्यः। केतुभ्यः उत्पातेभ्यः। नृभ्यः।

मनुष्येभ्यः। सरीसृपेभ्यः सर्पेभ्यः। दंष्ट्रिभ्यः व्याघ्रादिभ्यः। भूतेभ्यः पिशाचेभ्यः। अघेभ्यः व्यसनेभ्यः॥ २८॥

**सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात्।**
**प्रयान्तु संक्षयं सद्यो येऽन्ये श्रेयः प्रतीपकाः ॥ २९ ॥**

पूर्वोक्तयच्छब्दबलात् तच्छब्दोऽत्र लभ्यते। तद्भयकारणानि सर्वाणि एतानि ग्रहादीनि ये च अन्ये ग्रहाद्यपरे श्रेयः प्रतीपकाः श्रेयसः इष्टस्य प्रतीपकाः विरोधिनः। ते च सर्वे भगवतो नाम्नां हर्यादीनां रूपाणां आयुधधारणविशेषेण केशवादीनां अस्त्राणां चक्रादीनां कीर्तनात् उच्चारणसामर्थ्यात्। संक्षयं सद्यः सपदि प्रयान्तु प्राप्नुवन्तु। अत्रादौ बीजाभावः। यत्तत्संबन्धस्य श्लोकद्वयोपात्तत्वात्। न च यथैकात्म्येत्यत्रापि एतत्साम्येन बीजाभावप्रसङ्गः। यथाशब्दस्यैकस्मिन्नेव तच्छब्देन सङ्गतेर्दर्शयिष्यमाणत्वात्॥ २९॥

अथवा ह पार्षदयोरपि उपाङ्गत्वेनायुधसाम्यात् तावपि भगवत्प्रतिमारूपौ मत्वा कृच्छ्ररक्षार्थं प्रार्थयति **गरुड इति।**

**गरुडो भगवान्स्तोत्रस्तोमछन्दोमयः प्रभुः।**
**रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ॥ ३० ॥**

भगवान्भगः ऐश्वर्यादिरूपो विष्णुः विद्यते यस्मिन्स तथा। पूज्यरूपो वा। स्तोत्राणां स्तोमः समूहो यस्मिन् तत् छन्दो वेदः तन्मयः तत्प्रधानः सर्ववेदर्षित्वादित्याशयः। प्रभुः सर्ववेदधारणे सर्वकृच्छ्रतो रक्षणे वा समर्थः। यद्वा अकथप्रविसंभूम सखहा विष्णुवाचकाः। इत्यभिधानात्प्रो विष्णुर्भवत्यस्मिन्निति प्रभुर्गरुडः। तथा विष्वक्सेनः विशेषेण सुष्ठु अंच्यते पूज्यते स विष्वक्। अंचु गति पूजनयोरिति धातोः। विशेषपूज्यः सेनः श्रीशो

यस्मिन् सः। सपरोक्षे च सा लक्ष्मीरिति। इनः स्वामिनि सूर्ये चेति चाभिधानात्। तन्नामा पार्षत्प्रधानः। एक एव परो विष्णुर्भूषाहेति ध्वजेष्वजः। ततच्छक्तिस्वरूपेण स्वयमेव व्यवस्थित इत्युक्तेः। परः स्वोहरिरुद्दाम इति नाम चतुष्टयम्। विष्णोर्गुह्यं तु यो वेद न स पापैः प्रलिप्यत इति तात्पर्योक्तेः स्वो विष्णुः तस्य नामभिः कीर्तितैः इति शेषः। तन्निमित्तेनेत्यर्थः। अशेषकृच्छ्रेभ्यः सर्वसङ्कटेभ्यः। रक्षतु। अत्रादौ विमिति बीजं योज्यम्॥ ३०॥

एवं स्वरक्षार्थे भगवतः स्वरूपाङ्गानि संप्रार्थ्य स्वस्याप्यङ्गानि रक्ष्यत्वेन दर्शयन् गायत्र्युक्त'धी'शब्दवाच्यबुद्धेरेकत्वेऽपि बहुवचनस्याद्यर्थकत्वात् तदर्थं विशदयति **सर्वापद्भ्य** इति।

**सर्वापद्भ्यो हरेर्नाम रूपयानायुधानिनः।**
**बुद्धीन्द्रियमनःप्राणान्पान्तु पार्षदभूषणाः ॥ ३१ ॥**

हरेर्नामानि हर्यादीनि रूपाणि केशवादीनि यानं गरुडः आयुधानि चक्रादीनि। पार्षदो विष्वक्सेनः भूषणाः कौस्तुभादयः दैवतविवक्षया पुंलिङ्गत्वम्। तत्कण्ठगं कौस्तुभमासधातेत्याद्युक्तत्वात्। नोऽस्माकं बुद्धीन्द्रियमनःप्राणान् तदुपलक्षितान्यतत्त्वानि चक्रमात् सर्वापद्भ्यः सर्वसङ्कटेभ्यः पान्तु। अत्रादौ षमिति बीजम्॥ ३१॥

यानायुधाद्युपाङ्गानां रक्षणसामर्थ्येनाङ्गिनो हरेः सिद्धसर्वोत्कृष्टत्वस्य भेदाविनाभूतत्वात् भेदस्य च प्रतियोगिसत्तासापेक्षत्वात्तत्सत्तादिव्येन स्वोपद्रवनाशं प्रार्थयति **यथा ही**ति।

**यथा हि भगवानेव वस्तुतः सदसच्च यत्।**
**सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥ ३२ ॥**

यथा येन पारमार्थिकत्वेन भगवान् वस्तुतः तसेः सार्वविभक्तिकत्वात् सत्यरूपः तथा तेनैव पारमार्थिकत्वेन सत् कार्यरूपं असत् कारणरूपञ्च जगत्। "सदभिव्यक्तरूपत्वात्कार्यमित्युज्यते बुधैः। असदव्यक्तरूपत्वात्कारणं कवयो विदुरि"त्युक्तेः। वस्तुतः सत्यरूपं हि निश्चितम्। एवशब्दः व्यावहारिकसत्तां व्यावर्तयति। इति यत् सत्यं तेन अनेन उक्तेन सत्येन सत्याख्यप्रमाणेन नोऽस्माकं सर्वे उपद्रवाः आध्यात्मिकादयः नाशं यान्तु गच्छन्तु। यद्वा पुरुष एवेदं सर्वमिति श्रुतेर्भगवानेव सदसत् कार्यकारणात्मकं जगदुच्यते। तत्र हेतुमाह वस्तुत इति। वसत्यस्मिञ्जगदिति वस्तु तस्य भावस्तत्त्वं तस्मात्। भावप्रधानो निर्देशः। जगदाधारत्वेन तन्नियामकत्वादिति भावः। इति यत् सत्यं तेनेति पूर्ववत्। अत्रादौ षमिति बीजम्॥ ३२॥

गुणावयवावताराणामपि सर्वान्तःपातित्वेन हरिणा भेदः स्यादित्याशङ्क्य स्वरूपभूतानां तेषां भेदाभावं विशेषबलेन साधयति **यथेति।**

**यथैकात्म्यानुभावेन विकल्परहितः स्वयम्।**
**भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥ ३३॥**

यथा येन। एक एव अद्वितीय एव आत्मा स्वरूपं तस्य भावः ऐकात्म्यं तस्मिन् विषये अनुभवः अघटितघटकत्वरूपसामर्थ्यविशेषस्तेन। इदमुक्तं भवति। स्वरूपगुणावयवावतारादीनामभेदेऽङ्गीक्रियमाणे ज्ञानस्य ज्ञानित्वं ज्ञानिनो ज्ञानत्वं ज्ञानस्यानन्दत्वं आनन्दस्य च ज्ञानत्वं अङ्गस्य चाङ्गित्वं अङ्गिनश्चाङ्गत्वम्। करादेश्चरणादित्वं चरणादेः करादित्वं मूलस्य अवतारत्वं अवतारस्य च मूलरूपत्वं मत्स्यादेः कूर्मादित्वं कूर्मादेर्मत्स्यादित्वम्।

एवमादि सर्वं दुर्वचं स्यात् । दुर्घटत्वात् । तथापि अस्ति भगवति कश्चित् दुर्घट घटकत्वरूपो विशेषो येन सर्वं सुवचम् । अतः तेनेत्यर्थः । स्वयं भगवान् विकल्परहितः विविधत्वेन उक्तपरस्परभेदेन कल्पः कल्पनं तेन रहितः शून्योऽस्ति । यथा शब्दबलात् लब्धं तथा । तथेत्यर्थः । स्वमायया स्वरूपभूतातिशयितसामर्थ्येन व्यत्ययोऽतिशयकुत्सनाभेदेषु इति सूत्रात् अतिशयार्थो लिङ्गभेदः । शक्तीः शक्यरूपाः भूषणायुधलिङ्गाख्याः भूषणानि कौस्तुभादीनि आयुधानि रथाङ्गादीनि । लिङ्गानि ध्वजस्थगरुडादीनि उरःस्थश्रीवत्सादीनि वा तेषां आख्याः नामानि स्वयं तद्भिन्नोऽपि तन्नाममात्रमित्यर्थः । धत्ते धारयति । अत्रादौ वेमिति बीजं योज्यम् ॥ ३३ ॥

तेनैव दिव्येन स्वरक्षां प्रार्थयति । तेनेति ।

**तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः ।**
**पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ ३४ ॥**

तेनैव तथाहीत्युक्तेनैव यत् स्वरूपे अद्वैतम् । जीवजडविषये द्वैतं सत्यं तेनैव वा सत्यमानेन सत्यप्रमाणेन । सर्वज्ञो नारायणः नरसंबन्धित्वान्नारं सर्वं ज्ञानं तस्याश्रयत्वात् । भगवान् वासुदेवः वसत्यस्मिन्भगमिति वासुः स चासौ देवश्चेति व्युत्पत्तेः । हरिः विष्णुः इन्द्रनीलसमाभास इत्युक्तया नीलवर्णत्वात् । सर्वैरनवशेषैः स्वरूपैः हर्यादिभिः सदा प्रातरादिकालेषु सर्वत्र जलादिस्थानेषु सर्वगः चक्राद्यायुधादिप्रविष्टः नः पातु । अनेनैतत्सर्वपाठानवसरेऽस्यैव श्लोकस्य पांठः कार्य इति सूचितम् । सर्वस्याप्यत्र संग्रहेण गृहीतत्वात् । अत्रादौ नमिति बीजम् ॥ ३४ ॥

एवं स्वरक्षार्थं प्रार्थ्य । अस्य स्तोत्रस्य नारायणवर्मेत्याख्यायाः नारायणीयावतारो नारसिंहः तस्येदं वर्म इत्यर्थं विशदीकर्तुं पूर्वं मध्ये च

नृसिंहस्योक्तावपि पुनरन्तेऽपि नृसिंहमेव प्रतिपादयन् तथा गायत्रीदैवतस्य सवितुर्निद्राजन्यभयहारित्वस्य सर्वतेजोग्रासकत्वस्य मेरुप्रदक्षिणीकरणेन सर्वदिग्व्याप्तत्वस्य चानुभवसिद्धत्वात्तद्गुणानां नृसिंहे प्रतिपादनेनास्य गायत्रीव्याख्यानरूपत्वमिति च प्रतिपादयन्तं स्वरक्षार्थं प्रार्थयति विदिक्ष्विति।

विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान्नारसिंहः।
प्रहापयन्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३५ ॥

विदिक्षु आग्नेयादिकोणेषु दिक्षु पूर्वादिचतुर्दिक्षु। कौरवपाण्डवन्यायेनेदं बोध्यम्। ऊर्ध्वं उपरिष्टात्। अधः अधस्तात्। समन्तात् परितः स्वसकाशात् यावद्दशादिगन्तास्तन्मध्यवर्ति सर्वप्रदेशेष्वित्यर्थः। दिशां विभुत्वेऽपि दिगन्तविवक्षया विदिगाद्युक्तेः। अन्तः जीवस्याभ्यन्तरे। बहिः शरीराभ्यन्तर एव जीवाद्बहिष्ठात्। अधिकरणबलात् स्थित इति शेषः। अनेन गायत्र्युक्ततच्छब्दस्य व्याप्त्यर्थकत्वं बोधितम्। भगवान् ऐश्वर्यादिमान्। तस्यैव भजनीयत्वं युज्यत इत्यतोऽनेन वरेण्यशब्दार्थोऽभिहितः। नारसिंहः नराणां जीवानां समूहो नारं तस्य सिं षीञ् बन्धन इति धातोः स्थूलदेहबन्धं हन्ति गमयति स तथा। अन्तर्णीतण्यर्थाद्धन् हिंसागत्योरिति धातोर्जीवानां स्थूलदेहसंबन्ध एव सृष्टिर्हीत्यतोऽनेन सवितृशब्दार्थो बोधितः। तस्य जगत्प्रसवितृरूपप्रवृत्तिनिमित्तकत्वात्। स्वाम्यर्थकस्य देवशब्दस्याप्यनेनैव सिंहशब्दस्यापि तदर्थकत्वात्। स्वनेन स्वाट्टहासेन लोकभयं लोकानां स्वानुकूलजनानां भयं या निशा सर्वभूतानामित्याद्युक्त निद्रादिजन्यभयं प्रहापयन् गमयन्। अनेन भर्गशब्दो व्याख्यातः। भरं भवभयभरं गमयतीति व्युत्पत्तेः। उपपदे अलोपश्छान्दसः। स्वतेजसा स्वसामर्थ्येन ग्रस्तं अपहृतं समस्तानां बुद्ध्यादीनां तेजः

विषयधावनसामर्थ्यं येन सः अनेनोत्तरार्धर्चस्य। प्रचोदयादित्यस्य स्वानुकूल्ये प्रेरयेदित्यर्थकत्वात्। पात्विति पूर्वेणान्वयः। प्रहापयल्लोकेति पाठे प्रकर्षेणात्याजयदित्यर्थः। अत्रादौ मः इति बीजम्। एतत्स्तोत्रादौ पठितेनोऽङ्कारेण गायत्रीमन्त्रवर्णबीजोपन्यासः सर्वश्लोकादौ कर्तव्य इति सूचितम्। तत्पक्षे अयमर्थः। तनु विस्तार इति धातोः तनोति गजेन्द्ररक्षामटवीरक्षां वेति हरिरित्यनेन आद्याक्षरस्य देवतोक्तेति ज्ञेयम्। त्सरछद्मगतौ सृगतौ वेति धातोः त्सरति छद्मना सत्यव्रतस्य बलेर्दैत्यानां च मोहकत्वेन गच्छति रूपं प्राप्नोति अथवा सरति गच्छति जलं बलियज्ञं अमृतपरिवेषणार्थं देवासुरपंक्तिमिति मत्स्यवामनमोहिन्यः। अनेन द्वितीयस्य। वी गतिव्याप्तिप्रजनेत्यादिधातोः व्येति स्तंभे प्रजायतेऽसौ नारसिंहः। अनेन तृतीयस्य। तुः सौत्रो धातुः प्रतिवृद्धिहिंसास्वित्युक्तेः तौ तिहन्ति हिरण्याक्षं क्षत्रकुलं रक्षः कुलं चेति वराहो भार्गवो राघवश्च। अनेन चतुर्थस्य। वा गति गन्धनयोरिति धातोः गत्यर्थानां ज्ञानार्थत्वाच्च वाति जानाति प्रजापोषणोपायं तपः योगं साङ्ख्यं चेति पृथुर्नरनारायणौ दत्तः कपिलश्च। अनेन पञ्चमस्य। रेवृ प्लवगताविति धातोः रेवते काममुल्लंघ्य गच्छति उत्पतन्गच्छति ब्रह्मादीनुल्लंघ्य जानाति तरन्गाच्छति चेति सनत्कुमारो हयग्रीवो महिदासः कूर्मश्च। अनेन षष्ठस्य। णश्च निर्वृतिवाचक इत्युक्तेः णिप्रापण इति धातोश्च णयति सुखयति रोगनिवर्तनात् सर्वानिति नयति प्रवर्तयति पारमहंस्यमिति। नयति यागक्रियाः। णयति बलभद्रमिति धन्वन्तरिः ऋषभो यज्ञो बलाविष्टश्च। अनेन सप्तमस्य। या प्रापण इति धातोः यापयति प्रापयति धर्मज्ञानं पाषण्डज्ञानं कलिनाशं चेति व्यासो बुद्धः कल्की च। अनेनाष्टमस्य। भल भल्ल परिभाषणादावित्यतः भल्यते आयुधधारणविशेषेण परिभाष्यते स केशवो गोविन्दो नारायणो विष्णुश्च। अनेन नवमस्य। मधुकैटभाख्यौ हत्वा नयच्छ्रुतिगणांश्चेत्युक्तेः

ऋगुपलक्षितसर्ववेदपालकत्वान्मधुसूदनः ऋ गतावित्यतः ऋतं गतं तलभूस्वर्गार्थकेषु गोषु यस्येति त्रिविक्रमः अर्च पूजायामिति धातोः ऋक् पूज्या रमा तामवतीति माधवः स्वविषयगमनात् ऋवाच्येन्द्रियेषु नियामकत्वेन गच्छति स हृषीकेशः ऋचा अजस्य नाभावित्यृचा अयते ज्ञायते स पद्मनाभः। अनेन दशमस्य। देङ् पालन इति धातोः दयति पालयति सापराधं भृगुं बलिं यशोदां चेति श्रीधरो वामनो दामोदरः। अनेनैकादशस्य। याति भगवत्प्रयुक्तं सत् दैत्यहिंसार्थं गच्छति तच्चक्रम्। अनेन द्वादशस्य। षोंत कर्मणि इति धातोः स्यति नाशयति कूष्माण्डादीनिति गदा। अनेन त्रयोदशस्य। धीङ् आधार इति धातोः। भगवन्मुखवायोराश्रयत्वात् शङ्खः। अनेन चतुर्दशस्य। मिनु हिंसायामिति धातोः मिनोति छिनत्ति अरीनिति खड्गम्। अनेन पञ्चदशस्य। अन्तर्णीतण्यर्थात् ओहाक् त्याग इति धातोः हापयति त्याजयति परशास्त्रप्रहारभयमिति चर्म। अनेन षोडशस्य। धिनु पुष्टाविति धातोः पुष्कलानि नामादिकीर्तनपरिहार्याणि भयानि। अनेन सप्तदशस्य। यु मिश्रण इति धातोः सहकीर्तितान्येव भयपरिहारकाणि नामादीनि। अनेनाष्टादशस्य। यु जुगुषायामिति धातोः स्वामिनं गोप्तुमिच्छुत्वात् गरुडो विष्वक्सेनश्च। अनेनैकोनविंशस्य। नश् अदर्शन इति धातोः अदृश्यानि नामरूपादीनि। अनेन विंशस्य। पृच् संयमन इति धातोः सर्वनियामकत्वेन सदसच्छब्दवाच्यः। अनेनैकविंशस्य। चुद प्रेरण इति धातोः यत्पुरुषं व्यदधुरिति श्रुतेश्चैकरूपतोऽन्तःस्थत्वेन प्रेरकत्वात् भिन्नवस्तु नाममात्रवाच्यः। अनेन द्वाविंशस्य। देङ् पालन इत्यतः सदा सर्वत्र सर्वतः पालकत्वात् सर्वगः। अनेन त्रयोविंशस्य। यम्यत्वात् यवाच्यासुः दिक्षु आततत्वात् व्याप्तत्वात् अत सातत्यगमन इत्यतः नारसिंहः। अनेन

चतुर्विंशस्येति। एवंरीत्या नारायणवासुदेवविष्णुमन्त्रवर्णबीजानामपि तत्तद्देवतागुणप्रतिपादकत्वं ज्ञेयम्। विस्तरभयान्नेह प्रपञ्चितम्॥ ३५॥

एवमुक्तं स्तोत्रं अनूद्य उपसंहरन् फलमादिशति मघवन्निति।

**मघवन्निदमाख्यातं वर्म नारायणात्मकम्।**
**विजेष्यस्यञ्जसा येन दंशितो सुरयूथपान् ॥ ३६ ॥**

येन वर्मणा त्वं अञ्जसा दंशितः संनद्धः सन् असुरयूथपान् दैत्यगणपालकान् विजेष्यसि। हे मघवन्निन्द्र। तदिदं नारायणात्मकं नृसिंहदेवताकं वर्म आख्यातं उक्तम्॥ ३६॥

**एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा।**
**पदा वा संस्पृशेत्सद्यः साध्वसात्स विमुच्यते ॥ ३७ ॥**

एतत् वर्म। यं यं पुमांसम्। साध्वसात् भयात्। स पुमान्॥ ३७॥

**न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत्।**
**राजदस्युग्रहादिभ्यो व्याध्यादिभ्यश्च कर्हिचित् ॥ ३८ ॥**

विद्यां गायत्र्यर्थवेदनरूपां नारायणवर्माख्यां श्लोकततिम्। कुतश्चिदित्येतद्विशदयति राजेति। पूर्वादिशब्दो व्याघ्राद्यर्थकः। अन्योऽग्निविषाद्यर्थकः॥ ३८॥

**इमां विद्यां पुरा कश्चित्कौशिको धारयन् द्विजः।**
**योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥ ३९ ॥**

उक्तदार्ढ्यायास्य माहात्म्यातिशयं वक्तुमिति हासमुपक्षिपति इमामिति चतुर्भिः कौशिकः कौशिकनामा स्वाङ्गं स्वशरीरं मरुधन्वनि मरुधन्वाख्यदेशविशोषे ॥ ३९ ॥

**तस्योपरि विमानेन गन्धर्वपतिरेकदा ।**
**ययौ चित्ररथस्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ४० ॥**

चित्ररथः चित्ररथाख्यः यत्र यस्मिन्स्थले द्विजक्षयः कौशिकशरीरविनाशोऽभूत् तस्य स्थलस्योपरि उपरिष्टात् ॥ ४० ॥

**साङ्गनो न्यपतत्सद्यः सविमानो ह्यवाक्शिराः ।**
**विद्यामिमां धारयतो मृतस्यास्थिविलङ्घनात् ॥ ४१ ॥**

साङ्गनः स्त्रीसहितः अवाक् शिराः अधोमस्तकः इमां नारायणवर्माख्यां धारयतः मृतस्य कौशिकस्य ॥ ४१ ॥

**स वालखिल्यवचनादस्थीन्यादाय विस्मितः ।**
**प्रास्य प्राची सरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥ ४२ ॥**

सचित्ररथः अस्थीनि कौशिकास्थीनि प्राची सरस्वत्यां प्राग्वाहिनी या सरस्वती नाम्नी नदी तस्यां प्रास्य क्षिप्त्वा विस्मितः सन् स्वधामान्वगात् ॥ ४२ ॥

**य इदं शृणुयात्काले यो धारयति चादृतः ।**
**तं नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥ ४३ ॥**

श्रोतृधारकयोः फलविशेषमाह **य इति** । यः पुरुषः काले भयकाले इदं नारायणवर्म शृणुयात् भूतानि सर्वे तदवर प्राणिनः श्रोतारं नमस्यन्ति प्रणमन्ति

यश्चादृतः आदरवान् सन्धारयति सन्नह्यति इदमित्यावर्त्य स पुमान् सर्वतोभयात्सकलभयान्मुच्यते ॥ ४३ ॥

श्रीशुक उवाच—

एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ।
त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधे सुरान् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे नारायणवर्मोपदेशो नामाष्टमोऽध्यायः ॥

शतक्रतुरिन्द्रः विश्वरूपान् त्वष्टृपुत्रात् विद्यां गायत्र्यर्थवेदनरूपां एतां चतुर्विंशतिं अधिगतः प्राप्तः सन् मृधे युद्धे असुरान्विनिर्जित्य त्रैलोक्यलक्ष्मीं त्रिलोकसंपदं बुभुजे भुक्तवान् । अनेनेष्टानिष्टप्राप्तिपरिहाररूप-द्विविधपुरुषार्थरूपफलप्रदमिदमित्युक्तं भवति ॥ ४४ ॥

सदा सर्वत्र रक्षन्तं स्वरूपायुधवाहनैः ।
पार्षदैश्चात्मनो भक्तान्नमामि मृगपाननम् ॥ १ ॥

न च स्वबोधात्र परप्रबोधाद्व्याख्यातमेतन्न मृगेन्द्रवर्म ।
किं तर्हि राहेरनिवासिमेश नोदाद्विदस्तन्न विदूषयन्तु ॥ २ ॥

आत्मव्याख्यापितेनापि राहेरस्थो नृकेसरी ।
श्रीनारदावश्यकत्वात्प्रीयतां तस्य हीत्ययम् ॥ ३ ॥

इति श्रीमन्नारदानुगृहीतेन पुरुषोत्तमाचार्यमुख्यशिष्येण भीमाचार्यपुत्रवर्येण
श्रीनिवासाचार्याभिख्याधरेण विद्वद्वर्येण विरचितं
श्रीनारायणात्मनृसिंहवर्मव्याख्यानं समाप्तम् ।
श्रीलक्ष्मीनृसिंहार्पणमस्तु ॥

श्रीदारकोरुभवभूर्यनुकम्पितश्री-
तीर्थोत्थवर्मविलसद्विशदार्थलेखात् ।
राहेरगोऽन्वहमलं मयि कृष्णसंज्ञे
प्रीतो भवत्परमसाविभशात्रुवक्त्रः ॥ १ ॥

श्रीदारकोरुभवशिष्यपितृप्रणीत-
सिंहास्य वर्म विशदानुगुणार्थलेखात् ।
श्रीभैमिनारदसमीरगुरुत्रयान्त
र्वर्तीन्दिरार्चितपदाय नमो नमोऽस्तु ॥

* * *

॥ श्री गुरुराजो विजयते ॥

## ॥ नृसिंहकरावलंबनस्तोत्रम् ॥

त्वद्दर्शनप्रदसुतीर्थपराङ्मुखत्वात्
संसारकूपशयने पतितस्य सुप्त्या ।
उद्धर्तुमेव दयया वृतमानसत्वात्
श्रीमन्नृसिंह मम देहि करावलंबम् ॥

मातापितासि भगवन् कुलदेवतासि
बन्धुस्त्वमेव धनदोऽसि मतो वदान्यः ।
किं मामुपेक्षसि न किं गजराजबन्धुः
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥

श्रीगुरुभ्यो नमः ॥

श्री लक्ष्मीनृसिंहाय नमः ॥

# अथ नारायणात्मश्रीनृसिंहवर्मप्रयोगः

आचम्य। प्राणानायम्य। स्वेष्टदैवतं स्मृत्वा। पूर्वोच्चरितगुण-विशिष्टदेशकालयोः श्रीविष्णुप्रेरणया आधिदैविकाध्यात्मिकाधिभौतिक-कर्मभयनिवारकश्रीलक्ष्मीनृसिंहप्रीत्यर्थं श्रीनृसिंहरूपनारायणवर्मात्मक-महामन्त्रजपमहं मुख्यप्राणहस्तेन करिष्ये। इति संकल्प्य। अस्य श्रीनृसिंहरूपनारायणवर्मात्मकमहामन्त्रस्य विश्वरूपर्षिः। श्रीलक्ष्मीनृसिंहो देवता। पञ्चदशानां त्रिष्टुप् छन्दः। सप्तानामनुष्टुप् छन्दः। अन्त्यस्य त्रिष्टुप् छन्दः। मम श्रीलक्ष्मीनृसिंहप्रसादसिध्यर्थे जपे विनियोगः।

**अथ न्यासाः।** ॐ ॐ शिरसि। ॐ नं मुखे। ॐ मों उरसि। ॐ नां हृदये। ॐ रां पादयोः। ॐ यं जानुनोः। ॐ णां ऊर्वोः। ॐ यं उदरे। इत्यष्टाक्षरन्यासः ॥ १ ॥ ॐ ॐ दक्षिणाङ्गुष्ठमूले। ॐ नं अङ्गुष्ठाग्रे। ॐ मों तर्जन्याम्। ॐ भं मध्यमायाम्। ॐ गं अनामिकायाम्। ॐ वं कनिष्ठिकायाम्। ॐ तें वामाङ्गुष्ठमूले। ॐ वां अङ्गुष्ठाग्रे। ॐ सुं तर्जन्याम्। ॐ दें मध्यमायाम्। ॐ वां अनामिकायाम्। ॐ यं कनिष्ठिकायाम्। इति द्वादशाक्षरन्यासः ॥ २ ॥

ॐ ॐ हृदये। ॐ विं शिरसि। ॐ षं भ्रूमध्ये। ॐ णं शिखायाम्। ॐ वें नेत्रयोः। ॐ नं सर्वसन्धिषु। ॐ मः अस्त्राय फट्। इति षडक्षरन्यासः ॥ ॐ ॐ विदिशो बध्नामि। ॐ विं दिशो बध्नामि। ॐ षं

ऊर्ध्वं बध्नामि । ॐ णं अधो बध्नामि । ॐ वें समंताद् बध्नामि । ॐ नं अन्तर्बध्नामि । ॐ मः बहिर्बध्नामि । इति दिग्बन्धः ॥

अथ ध्यानम् । ऐश्वर्यवीर्यकीर्तिश्रीज्ञानवैराग्यरूपिणम् । परं ध्यायामि तेन स्यां विद्यातेजस्तपो वपुः ॥ १ ॥ इति ध्यात्वा ।

ॐ ॐ भूर्भुवः स्वः ॐ तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि । धियो यो नः प्रचोदयात् ॐ ॥ ॐ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॐ ॥ ॐ ॐ नमो नारायणाय ॐ ॥ ॐ ॐ नमो भगवते वासुदेवाय ॐ ॥ ॐ ॐ विष्णवे नमः ॐ ॥

ॐ तं ॐ ॥ ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः पतगेन्द्रपृष्ठे । दरारि चर्मासि गदेषु चाप पाशान्दधानोऽष्टगुणोऽष्टबाहुः ॥ १ ॥ ॐ त्सं । नं । जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् । स्थले च मायाबटुवामनोऽव्यात्त्रिविक्रमः खेऽवतु विश्वरूपः ॥ २ ॥ ॐ विं । मों । दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहो सुरयूथपारिः । विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥ ३ ॥ ॐ तुं । नां । रक्षत्वसौ मा ध्वनियज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः । रामोद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजो माम् ॥ ४ ॥ ॐ वें । रां । मामुग्रधन्वा अखिलप्रमादान्नारायणः पातु नरश्च हासात् । दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबन्धात् ॥ ५ ॥ ॐ रें । यं । सनत्कुमारोऽवतु कामदेवाद्धयशीर्षो मां पथि देवहेलनात् । देवर्षिवर्यः पुरुषान्तरार्चनात्कूर्मो हरिर्मां निरयादशेषात् ॥ ६ ॥ ॐ णिं । णां । धन्वन्तरिर्भगवान्पात्वपथ्याद् द्वंद्वाद्भयादृषभो निर्जितात्मा । यज्ञश्च लोकादुत तत्कृतान्नो बलो गणात्क्रोधवशादहीन्द्रः ॥ ७ ॥ ॐ यं । यं । द्वैपायनो भगवान्संप्रमोहाद्बुधस्तु

पाषण्डगणात्प्रवादात्। कल्कीकलेः कालमलात्प्रपातु धर्मावनायोरु-
कृतावतारः ॥ ८ ॥ ॐ भं । ॐ नमः । ॐ । मां केशवो गदया प्रातरव्यात् ।
भं । गोविंद आसङ्गव आत्तवेणुः । नं । नारायणः प्राह्ण उदात्तशक्तिः । गं ।
मध्यंदिने विष्णुररीन्द्रपाणिः ॥ ९ ॥ ॐ गों । भगवते । वं । देवोपराह्णे
मधुहोऽग्रधन्वा । तें । सायं त्रिधामावतु । मों । माधवो मां । दोषे । दें ।
हृषीकेश उतार्धरात्रे । वां । निशीथ एकोऽवतु पद्मनाभः ॥ १० ॥ ॐ दें ।
वासुदेवाय । सुं । श्रीवत्सलक्ष्म्यापररात्र ईशः । वां । प्रत्यूष ईशोऽसिधरो
जनार्दनः । यं । दामोदरोऽव्यादनुसंध्यं प्रभाते विष्णुः श्रीमान्भगवा-
न्कालमूर्तिः ॥ ११ ॥ ॐ वं । वां । चक्रं युगान्तानल तिग्मनेमि
भ्रमत्समन्ताद्भगवत्प्रयुक्तम् । दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा
वातसखो हुताशः ॥ १२ ॥ ॐ स्यं । सुं । गदेशनिस्पर्शनविष्फुलिङ्गे
निष्पिंढि निष्पिंढ्यजितप्रियासि । कूश्माण्डवैनायकयक्षरक्षो भूतग्रहांश्चूर्णय
चूर्णयारीन् ॥ १३ ॥ ॐ धीं । दें । त्वं यातुधान प्रमथ
प्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् । दरेन्द्रविद्रावयकृष्णपूरितो भीमस्वनोरीन्
हृदयानि कंपयन् ॥ १४ ॥ ॐ मं । वां । त्वं तिग्मधारासि
वरारिसैन्यमीशप्रयुक्तो मम छिन्धि छिन्धि ॥ १५ ॥ ॐ हिं । यं । चक्षूंषि
चर्मञ्छतचन्द्रछादयद्विषामघं नो हर पाप चक्षुषाम् ॥ १६ ॥ ॐ धिं । ॐ ।
यन्नोभयं ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च । सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्यो
घेभ्य एव च ॥ १७ ॥ ॐ यों । सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ।
प्रयान्तु संक्षयं सद्यो येऽन्ये श्रेयः प्रतीपकाः ॥ १८ ॥ ॐ यों । विं । गरुडो
भगवान्स्तोत्रस्तोमछन्दोमयः प्रभुः । रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः
स्वनामभिः ॥ १९ ॥ ॐ नः । षं । सर्वापद्भ्यो हरेर्नामरूपयानायुधानिनः ।
बुद्धीन्द्रियमनः प्राणान्पातु पार्षदभूषणाः ॥ २० ॥ ॐ प्रं । णं । यथा हि
भगवानेव वस्तुतः सदसच्च यत् । सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥

२१ ॥ ॐ चों । वें यथैकात्म्यानुभावेन विकल्परहितः स्वयम् । भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥ २२ ॥ ॐ दं । नं । तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः । पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ २३ ॥ ॐ यात् । मः । विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान्नारसिंहः । प्रहापयन्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ २४ ॥ ॐ ॥ इति जपेत् ।

ततः पुनः पूर्ववन्न्यासादि ध्यानान्तं विधाय अनेन श्रीनृसिंहरूपनारायणवर्मात्मकमहामन्त्रजपेन भगवान् आधिदैविकाध्यात्मिकाधिभौतिककर्मभयनिवारकश्रीलक्ष्मीनृसिंहः प्रीयताम् । प्रीतो भवतु ॥

श्रीकृष्णार्पणमस्तु ॥

* * *

यश्चिन्तारत्नकामद्रुमविभवभुवां म्ङ्गलं मङ्गलानां
सर्वासां संप्रदाय त्रिजगति जगतां मण्डनं मण्डनानाम् ।
हेमामत्रस्थदूर्वादधिमधुलवणैः दृष्टिमुत्तार्यवर्यैः
नीराज्यश्रीनृसिंहो दिनकरकरचिद्रत्नदीपावलीभिः ॥

श्रीमद्दुर्वन्तर्गतश्रीलक्ष्मीनृसिंहो जयति ॥

# अथ मन्त्रसिद्धिप्रकारः ॥

प्रातः स्नात्वा शुचिर्भूत्वा कृतनित्यक्रियः सुधीः ।
जप्त्वा देवीमष्टशतं त्रिगुणाष्टाक्षरं पुनः ॥ १ ॥

गुरूक्तसर्वमन्त्रान्वै जपित्वाऽक्षरसंख्यया ।
इष्टमन्त्रस्य संसिद्ध्यै ध्यात्वा तद्देवमादितः ॥ २ ॥

कल्पितैरुपचारैस्तं समर्च्य गुरुहृद्गतम् ।
तत्प्रेरितगुरोराज्ञां संगृह्याधिष्ठितासनः ॥ ३ ॥

नमस्कृत्य गुरून् भक्त्या प्राणानायम्य मन्त्रतः ।
वाग्यतो न्यस्य मन्त्राणामङ्गानि च निबद्ध दिक् ॥ ४ ॥

देवतां वाग्यतो ध्यायन्सुप्रसन्नां स्मरन्नृषिम् ।
छन्दश्च देवतां स्वस्य प्रेरकां फलदां द्रुतम् ॥ ५ ॥

संकल्प्य ज्ञातमन्त्रार्थः स्पष्टान्वर्णान्ब्रुवन् हृदा ।
जपेच्च सततं योगी त्यक्तबाह्यार्थकल्पनः ॥ ६ ॥

चलिते मानसे स्वाग्रस्थितार्चां वीक्ष्य तन्मनाः ।
भूत्वाह्नि सप्तमे लक्षसंख्या स्यात्तत्प्रकारतः ॥ ७ ॥

स जप्त्वा समर्पयेद्भूयः कृतन्यासादिको हरौ ।
जितेन्द्रियो मिताहारो विप्रशिष्टाशनोऽन्वहम् ॥ ८ ॥

ध्यायन्सर्वपदार्थेषु हरिं सिद्ध्येत मानवः ।
ॐकारस्यैव मुख्यार्थं नृणां कामप्रदं सदा ॥ ९ ॥

सिञ्जन्नूपुरसत्पादं हर्तारमखिलापदाम् ।
क्लीं वाच्यं कामदानात्तं वन्दे श्रीनारदार्चितम् ॥ १० ॥

इति मन्त्रसिद्धिप्रकारः समाप्तिमगमत् ॥

श्रीमद्दिव्यलक्ष्मीनृसिंहार्पणमस्तु ॥

* * *

श्रीमन्मृगेन्द्रास्यमनन्तवासं
वाङ्नारदाङ्घ्र्यङ्क कजोत्थनाभिम् ।
सांबा गणेशधृगदङ्कसश्रीः
प्राणेन्दिरोरुं भगवन्तमीडे ॥ १ ॥

— श्रीमद्भागवतविरोधोद्धार मङ्गलश्लोकः

## ಸರ್ವಜ್ಞ ಗೀತಾಚಾರ್ಯ ಸಮ್ಮತ ವೇದಾರ್ಥ ಪ್ರಸಾರಕ
## ವ್ಯಾಸಾಶ್ರಮ ಸಂಸ್ಥಾ. ಠಳಕವಾಡಿ, ಬೆಳಗಾಂವಿ.

### ಈ ಸಂಸ್ಥೆಯಿಂದ ಮುದ್ರಿತವಾದ ಕೃತಿಗಳು.

೧. ವಿಷ್ಣು ಸಹಸ್ರನಾಮ ಸಟೀಕ (ಪ್ರತಿಗಳು ಮುಗಿದಿವೆ.)
೨. ದ್ವಾದಶ ಸ್ತೋತ್ರ ಸಟೀಕ (ಕನ್ನಡ).
೩. ರಾಘವೇಂದ್ರ ಸ್ತೋತ್ರ ಸಟೀಕ (ಕನ್ನಡ).
೪. ಗೀತಾ ತ್ರಿವಿಧಾರ್ಥ ವಿವೃತ್ತಿ (ಸಂಸ್ಕೃತ).
೫. ಬೃಹತೀ ಸಹಸ್ರ ಪೂರ್ವಾರ್ಧ.
೬. ಪವಮಾನ ಸೊಮಮಂಡಲದ ಕನ್ನಡ ತಾತ್ಪರ್ಯಾರ್ಥವು (ದ್ವಿತೀಯ ಮುದ್ರಣ) ೬೦
೭. ಸ್ತೋತ್ರ ಮಹೋದಧಿ. ೨೫
೮. ಶಿಷ್ಟರಾಮಾಯಣ ಕನ್ನಡ ತಾತ್ಪರ್ಯಾರ್ಥ ೨೦
೯. ನಾರಾಯಣವರ್ಮ ಸಂಸ್ಕೃತ ವ್ಯಾಖ್ಯಾನ ಪ್ರಯೋಗ ಸಹಿತ ೫
೧೦. ಸಂಧ್ಯಾವಂದನ ಮೂಲ ವಿಸ್ತಾರ ೫
೧೧. ನಾರದಾಪದೋಕ್ತೀ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರ ಚರಿತ್ರ ೫
೧೨. ಶಿಷ್ಟರಾಮಾಯಾಣ ಸಂಸ್ಕೃತ ವ್ಯಾಖ್ಯಾನ ೫

### ಮುದ್ರಿಸತಕ್ಕ (ಕೃತಿ) ಗ್ರಂಥಗಳು

೧. ಪವಮಾನ ಪ್ರತಿಪದಾನ್ವಯಾರ್ಥ ಸಹಿತ (ಸಂಸ್ಕೃತ)
೨. ಪುರುಷ ಸೂಕ್ತ , ಸರಸ್ವತೀ ಸೂಕ್ತ , ಶ್ರೀಸೂಕ್ತ ವ್ಯಾಖ್ಯಾನ.
೩. ಬೃಹತಿ ಸಹಸ್ರ ಮೂಲ ಉತ್ತರಾರ್ಧ.
೪. ಬೃಹತಿ ಸಹಸ್ರ ಅರ್ಥ (ಸಂಸ್ಕೃತ)
೫. ವಿಷ್ಣುಸೂಕ್ತ, ಘರ್ಮಸೂಕ್ತ, ಸಮುದ್ರಸೂಕ್ತ ವ್ಯಾಖ್ಯಾನ.
೬. ವಿವಾಹ ಉಪನಯನಾದಿ ಸಂಸ್ಕಾರಗಳ ಸೂಕ್ತ ಮಂತ್ರಾರ್ಥಗಳು.
೭. ಶ್ರಾವಣೀ, ಪ್ರಾತಃಸೂಕ್ತ, ಸೌರಸೂಕ್ತ, ಬಳಿಥ್ಥಾಸೂಕ್ತ ಮಂತ್ರಾರ್ಥಗಳು.
೮. ಶಾಂತಿಸೂಕ್ತ, ಶ್ರಾದ್ಧಸೂಕ್ತ ಮಂತ್ರಾರ್ಥಗಳು.
೯. ಸಂಧ್ಯಾವಂದನ, ವೈಶ್ವದೇವ, ಬ್ರಹ್ಮಯಜ್ಞ ಮಂತ್ರಾರ್ಥಗಳು.
೧೦. ಋಗ್ಭಾಷ್ಯವುಳ್ಳ ಮೊದಲನೇ ಮಂಡಲದ ೨ನೇ ಅನುವಾಕದಿಂದ
ಮಂತ್ರಗಳ ಬೃಹತೀ ಸಹಸ್ರ, ಸಹಿತ ತಾತ್ಪರ್ಯಾರ್ಥಗಳು.
೧೧. ನಿತ್ಯಾಹ್ನಿಕ ತಂತ್ರಸಾರ ಪದ್ಯ ಮಾಲೋಕ್ತ ಮಂತ್ರಗಳ ಅರ್ಥವು. ಇತ್ಯಾದಿಗಳು.